॥ श्रीरामजयम् ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ उत्तरकाण्डम् ॥

धर्मालयसंस्करणम् ।

***The Dharmalaya Edition***

Edited by

The Late Rao Sahib P. S. KRISHNASWAMI IYER,

*Dharmalaya, Mylapore.*

Published with the aid of

Sri. M. N. RAMASWAMY IYER,

*Banker, Palghat.*

By

**R. Subrahmanya Vadhyar & Sons,**

**BOOK-SELLERS & PUBLISHERS,**

**KALPATHI-PALGHAT**

Library Edition.] 1941 [Price Rs. 1—8—0

॥ श्रीः ॥

## ॥ विषयानुक्रमणिका ॥

॥ ॐ ॥

॥ अथ स्मार्तानां श्रीरामायणपठनोपक्रमेऽनुसन्धेया: श्लोका: ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २ ॥

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४ ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५ ॥

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८ ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
य: शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥
य: कर्णाञ्जलिसंपुटैरहरहः सम्यक् पिबत्यादरात्
वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥
तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥
वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥
श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६ ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ॥
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

॥ पारायणसमापनसमये अनुसन्धेयश्लोकक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ २ ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥

यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ९ ॥

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ १० ॥

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ ११ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुध्याऽऽत्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ १२ ॥

॥ श्रीवैष्णवानां श्रीरामायणपठनोपक्रमेनुसन्धेयाः श्लोकाः ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १ ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ २ ॥

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ५ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

श्रीराघवं दशरथात्मजमप्रमेयं
सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददलायताक्षं
रामं निशाचरविनाशकरं नमामि ॥ १२ ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

### ॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ ३ ॥

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥

॥ अथ माध्वानां रामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥

लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः ।
श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥

सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥

अभ्रमं भङ्गरहितमजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ६ ॥

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि विधत्तां सन्निधिं मानसे च ॥ ७ ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥

चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९ ॥

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १० ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ११ ॥

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ १४ ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २० ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वन्दे वन्द्यं विधिभवमहेन्द्रादिबृन्दारकेन्द्रैः
व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च ।
धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः
सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥

भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं
लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् ।
चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं
कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥

महाव्याकरणाम्भोधिमन्थमानसमन्दरम् ।
कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥

मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् ।
नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥

स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे ।
उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७ ॥

वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया ।
यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥

सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे ।
विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥

हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् ।
तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥

पारायणसमापन क्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ।

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ।

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ।

इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥

ॐ

॥ श्रीगुरुभ्यो नमः ॥

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रस्वामिने नमः ॥

# ॥ श्रीमद्वाल्मीकिरामायणम् ॥

## ॥ उत्तरकाण्डम् ॥



[ पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे षड्विंशतितमेऽह्नि उत्तरकाण्डे प्रथमसर्गमारभ्य विंशसर्गपर्यन्तं (20725—21491 श्लोकाः) गीतम्। तस्मिन् दिने गीताः श्लोकाः 767]

### प्रथमः सर्गः ॥ १ ॥

श्रीरामप्रश्नः ॥

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते ।
आजग्मुर्ऋषयः सर्वे राघवं प्रतिनन्दितुम् ॥ १ ॥
कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च ।
कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः ॥ २ ॥
स्वस्त्यात्रेयोऽथ भगवान्नमुचिः प्रमुचिस्तथा ।
अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा ॥
आजग्मुस्ते सहागस्त्या ये स्थिता दक्षिणां दिशम् ॥ ३ ॥

नृषद्गुः कवषो धौम्यो रौद्रेयश्च महानृषिः ।
तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम् ॥ ४ ॥

वसिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः ।
जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा ॥
उदीच्यां दिशि ये विप्रा नित्यमेव निवासिनः ॥ ५ ॥

सम्प्राप्य ते महात्मानो राघवस्य निवेशनम् ।
विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ॥ ६ ॥

द्वाःस्थं प्रोवाच धर्मात्मा ह्यगस्त्यो मुनिसत्तमः ।
निवेद्यतां दाशरथेर्ऋषयो वयमागताः ॥ ७ ॥

प्रतीहारस्ततस्तूर्णमगस्त्यवचनोदितः ।
समीपं राघवस्याशु प्रविवेश महात्मनः ॥ ८ ॥

स रामं दृश्य सहसा पूर्णचन्द्रसमद्युतिम् ।
अगस्त्यं कथयामास सम्प्राप्तमृषिभिः सह ॥ ९ ॥

श्रुत्वा प्राप्तान् मुनींस्तांस्तु प्रत्युत्थाय कृताञ्जलिः ।
रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह ॥ १० ॥

तेषु काञ्चनचित्रेषु महत्सु च वरेषु च ।
यथार्हमुपविष्टास्ते आसनेष्वृषिपुङ्गवाः ॥ ११ ॥

रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः ।
महर्षयो वेदविदो रामं वचनमब्रुवन् ॥ १२ ॥

कुशलं नो महाबाहो सर्वत्र रघुनन्दन ।
त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम् ॥ १३ ॥

न हि भारः स ते राम रावणः पुत्रपौत्रवान् ॥ १४ ॥

सधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशयः ।
दिष्ट्या त्वया हतो राम रावणो राक्षसेश्वरः ॥ १५ ॥

दिष्ट्या विजयिनं त्वाऽद्य पश्यामः सह सीतया ॥ १६ ॥

दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः ।
अकम्पनश्च दुर्धर्षो निहतास्ते निशाचराः ॥ १७ ॥

यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते ।
दिष्ट्या ते समरे राम कुम्भकर्णो निपातितः ॥ १८ ॥

त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ।
दिष्ट्या ते निहता राम महावीर्या निशाचराः ॥ १९ ॥

कुम्भश्चैव निकुम्भश्च राक्षसौ भीमदर्शनौ ।
दिष्ट्या तौ निहतौ राम कुम्भकर्णसुतौ मृधे ॥ २० ॥

युद्धोन्मत्तश्च मत्तश्च कालान्तकयमोपमौ ।
यज्ञकोपश्च धूम्राक्षो जम्बुमाली महोदरः ॥ २१ ॥

कुर्वन्तः कदनं घोरमेते शस्त्रास्त्रपारगाः ।
अन्तकप्रतिमैर्बाणैर्दिष्ट्या विनिहतास्त्वया ॥ २२ ॥

दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः ।
देवतानामवध्येन विजयं प्राप्तवानसि ॥ २३ ॥

सह्यमेतन्महाबाहो रावणस्य निबर्हणम् ।
असह्यमेतत्संप्राप्तं रावणेर्यन्निबर्हणम् ॥ २४ ॥

सङ्ख्ये तस्य न किञ्चित्तु रावणस्य पराभवः ।
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥ २५ ॥

दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः ।
मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया ॥ २६ ॥

सोऽवध्यः सर्वभूतानां महामायाधरो युधि ।
विस्मयस्त्वेष चास्माकं तच्छ्रुत्वेन्द्रजितं हतम् ॥ २७ ॥

एते चान्ये च बहवो राक्षसाः कामरूपिणः ।
दिष्ट्या त्वया हता वीरा रघूणां कुलवर्धन ॥ २८ ॥

दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् ।
दिष्ट्या वर्धसि काकुत्स्थ जयेनामित्रकर्शन ॥ २९ ॥

श्रुत्वा तु तेषां वचनमृषीणां भावितात्मनाम् ।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ ३० ॥

भगवन्तः कुम्भकर्णं रावणं च निशाचरम् ।
अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ॥ ३१ ॥

महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् ।
मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ ॥ ३२ ॥

अतिकायं त्रिशिरसं धूम्राक्षं च निशाचरम् ।
अतिक्रम्य महावीर्यान् किं प्रशंसथ रावणिम् ॥ ३३ ॥

कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः ।
केन वा कारणेनैष रावणादतिरिच्यते ॥ ३४ ॥

शक्रोऽपि विजितस्तेन कथं लब्धवरश्च सः ।
कथं च बलवान् पुत्रो न पिता तस्य रावणः ॥ ३५ ॥

शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ।
यदि गुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम् ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे प्रथमः सर्गः

आदितः श्लोकाः **20760** उत्तरकाण्डे आदितः श्लोकाः **36**

## द्वितीयः सर्गः ॥ २ ॥

### पौलस्त्यजन्म ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
कुम्भयोनिर्महातेजा राममेतदुवाच ह ॥ १ ॥

श्रृणु राम यथावृत्तं तस्य तेजो बलं महत् ।
जघान शत्रून् येनासौ न च वध्यः स शत्रुभिः ॥ २ ॥

जयं ते रावणस्याहं कुलं जन्म च राघव ।
वरप्रदानं च तथा तस्मै दत्तं ब्रवीमि ते ॥ ३ ॥

पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः ।
पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥ ४ ॥

नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा ।
प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः ॥ ५ ॥

स तु धर्मप्रसङ्गेन मेरोः पार्श्वं महागिरेः ।
तृणबिन्द्वाश्रमं गत्वा न्यवसन्मुनिपुङ्गवः ॥ ६ ॥

तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः ॥ ७ ॥

देवपन्नगकन्याश्च राजर्षितनयाश्च याः ।
क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ८ ॥

सर्वर्तुषूपभोग्यत्वाद्रम्यत्वात् काननस्य च ।
नित्यशस्तास्तु तं देशं गत्वा क्रीडन्ति कन्यकाः ॥ ९ ॥

गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ।
मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः ॥ १० ॥

अथ क्रुद्धो महातेजा व्याजहार महामुनिः ।
या मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति ॥ ११ ॥

तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः ।
ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः ॥ १२ ॥

तृणबिन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १३ ॥

गत्वाऽऽश्रमपदं तत्र विचचार सुनिर्भया ॥ १४ ॥

तस्मिन् काले महातेजाः प्राजापत्यो महानृषिः ।
स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥ १५ ॥

सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम् ।
अभवत्पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १६ ॥

बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः ।
इदं मे किं त्विति ज्ञात्वा पितुर्गत्वाऽऽश्रमे स्थिता ॥ १७ ॥

तां तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत् ।
किं त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १८ ॥

सा तु कृत्वाऽञ्जलिं दीना कन्योवाच तपोधनम् ।
न जाने कारणं तात येन मे रूपमीदृशम् ॥ १९ ॥

किं तु पूर्वं गताऽस्म्येका महर्षेर्भावितात्मनः ।
पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २० ॥

न च पश्याम्यहं तत्र काश्चिदभ्यागतां सखीम् ।
रूपस्य तु विपर्यासं दृष्ट्वा त्रासादिहागता ॥ २१ ॥

तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः ।
ध्यानं विवेश तच्चापि ह्यपश्यदृषिकर्मजम् ॥ २२ ॥

स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः ।
गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २३ ॥

भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम् ।
भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यताम् ॥ २४ ॥

तपश्चरणयुक्तस्य श्रम्यमाणेन्द्रियस्य ते ।
शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥ २५ ॥

तं ब्रुवाणं तु तद्वाक्यं राजर्षिं धार्मिकं तदा ।
जिघृक्षुरब्रवीत् कन्यां बाढमित्येव स द्विजः ॥ २६ ॥

दत्वा तु तनयां राजा स्वमाश्रमपदं गतः ।
साऽपि तत्रावसत् कन्या तोषयन्ती पतिं गुणैः ॥ २७ ॥

तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः ।
प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २८ ॥

परितुष्टोऽस्मि सुश्रोणि गुणानां सम्पदा भृशम् ।
तस्माद्देवि ददाम्यद्य पुत्रमात्मसमं तव ॥
उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम् ॥ २९ ॥

यस्मात्तु विश्रुतो वेदस्त्वयैषोऽध्ययतो मम ।
तस्मात् स विश्रवा नाम भविष्यति न संशयः ॥ ३० ॥

एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना ।
अचिरेणैव कालेनासूत विश्रवसं सुतम् ॥
त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥ ३१ ॥

श्रुतिमान् समदर्शी च व्रताचाररतस्तथा ।
पितेव तपसा युक्तो ह्यभवद्विश्रवा मुनिः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे द्वितीयः सर्गः ॥

आदितः श्लोकाः 20792 युद्धकाण्डे आदितः श्लोकाः 68

## तृतीयः सर्गः ॥ ३ ॥

### वैश्रवणोत्पत्तिः लङ्कादिप्राप्तिश्च ॥

अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः ।
अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥

सत्यवाञ्छीलवाञ्छान्तः स्वाध्यायनिरतः शुचिः ।
सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २ ॥

ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः ।
ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् ॥ ३ ॥

प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा ।
मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः ॥ ४ ॥

स तस्यां वीर्यसम्पन्नमपत्यं परमाद्भुतम् ।
जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्युतम् ॥ ५ ॥

तस्मिञ्जाते तु संहृष्टः सम्बभूव पितामहः ।
प्रजान्वेषिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ६ ॥

दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति ।
नाम तस्याकरोत् प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७ ॥

यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव ।
तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८ ॥

स तु वैश्रवणस्तत्र तपोवनगतस्तदा ।
अवर्धताहुतिहुतो महातेजा यथाऽनलः ॥ ९ ॥

तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः ।
चरिष्ये परमं धर्मं धर्मो हि परमा गतिः ॥ १० ॥

स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११ ॥

पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत् ।
जलाशी मारुताहारो निराहारस्तथैव च ॥
एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत् ॥ १२ ॥

अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह ।
गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् ॥ १३ ॥

परितुष्टोऽस्मि ते वत्स कर्मणाऽनेन सुव्रत ।
वरं वृणीष्व भद्रं ते वरार्हस्त्वं महामते ॥ १४ ॥

अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् ।
भगवंल्लोकपालत्वमिच्छेयं वित्तरक्षणम् ॥ १५ ॥

अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा ।
ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् ॥ १६ ॥

अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः ॥ १७ ॥

यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम् ।
तद्गच्छ त्वं हि धर्मज्ञ निधीशत्वमवाप्नुहि ॥
शक्राम्बुपयमानां च चतुर्थस्त्वं भविष्यसि ॥ १८ ॥

एतच्च पुष्पकं नाम विमानं सूर्यसन्निभम् ।
प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ १९ ॥

स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् ।
कृतकृत्या वयं तात दत्त्वा तव वरद्वयम् ॥ २० ॥

इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह ॥ २१ ॥

गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभःस्थलम् ।
धनेशः पितरं प्राह प्राञ्जलिः प्रयतात्मवान् ॥ २२ ॥

निवासनं न मे देवो विदधे स प्रजापतिः ।
भगवन् लब्धवानस्मि वरमिष्टं पितामहात् ॥ २३ ॥

तं पश्य भगवन् कञ्चिन्निवासं साधु मे प्रभो ।
न च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् ॥ २४ ॥

एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः ।
वचनं प्राह धर्मज्ञः श्रूयतामिति सत्तमः ॥ २५ ॥

दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ।
तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ॥
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा ॥ २६ ॥

राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ।
हेमप्राकारपरिघा यन्त्रशस्त्रसमावृता ॥
रमणीया पुरी सा हि रुक्मवैडूर्यतोरणा ॥ २७ ॥

राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ।
शून्या रक्षोगणैः सर्वैं रसातलतलं गतैः ॥ २८ ॥

शून्या सम्प्रति लङ्का सा प्रभुस्तस्या न विद्यते ।
स त्वं तत्र निवासाय गच्छ पुत्र यथासुखम् ॥ २९ ॥

निर्दोषस्तत्र ते वासो न बाधा तत्र कस्यचित् ॥ ३० ॥

एवमुक्तस्तु धर्मात्मा पित्रा धर्म्यमिदं वचः ।
निवेशयामास तदा लङ्कां पर्वतमूर्धनि ॥
नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सह ॥ ३१ ॥

अचिरेणैव कालेन संपूर्णा तस्य शासनात् ॥ ३२ ॥

स तु तत्रावसत् प्रीतो धर्मात्मा नैर्ऋतर्षभः ।
समुद्रपरिघायां तु लङ्कायां विश्रवात्मजः ॥ ३३ ॥

काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः ।
अभ्यागच्छत्सुसंहृष्टः पितरं मातरं च हि ॥ ३४ ॥

स देवगन्धर्वगणैरभिष्टुतस्तथैव सिद्धैः सह चारणैरपि ।
गभस्तिभिः सूर्य इवौजसा वृतः पितुः समीपं प्रययौ श्रिया वृत ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे तृतीयः सर्गः ॥

आदितः श्लोकाः 20827 उत्तरकाण्डे आदितः श्लोकाः 103

## चतुर्थः सर्गः ॥ ४ ॥

### सुकेशराक्षसोत्पत्तिः ॥

श्रुत्वाऽगस्त्येरितं वाक्यं रामो विस्मयमागतः ।
कथमासीत्तु लङ्कायां रक्षसामिति सम्भवः ॥ १ ॥

ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम् ।
तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥

भगवन्पूर्वमप्येषा लङ्काऽऽसीत्पिशिताशिनाम् ।
श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥ ३ ॥

पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम् ।
इदानीमन्यतश्चापि संभवः कीर्तितस्त्वया ॥ ४ ॥

रावणात्कुम्भकर्णाच्च प्रहस्ताद्विकटादपि ।
रावणस्य च पुत्रेभ्यः किं नु ते बलवत्तराः ॥ ५ ॥

क एषां पूर्वको ब्रह्मन् किं नाम च बलोत्कटः ।
अपराधं च कं प्राप्य विष्णुना द्राविताः कथम् ॥ ६ ॥

एतद्विस्तरतः सर्वं कथयस्व ममानघ ।
कौतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥ ७ ॥

राघवस्य वचः श्रुत्वा संस्कारालंकृतं शुभम् ।
ईषद्विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥ ८ ॥

प्रजापतिः पुरा सृष्ट्वा ह्यपः सलिलसंभवः ।
तासां गोपायने सत्त्वानसृजत्पद्मसंभवः ॥ ९ ॥

ते सत्त्वाः सत्त्वकर्तारं विनीतवदुपस्थिताः ।
किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥ १० ॥

प्रजापतिस्तु तान्याह सत्त्वानि प्रहसन्निव ।
आभाष्य वाचा यत्नेन रक्षध्वमिति मानदः ॥ ११ ॥

रक्षामेति च तत्रान्ये जक्षाम इति चापरे ।
भुक्षिताभुक्षितैरुक्तस्ततस्तानाह भूतकृत् ॥ १२ ॥

रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः ।
जक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १३ ॥

तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ ।
मधुकैटभसङ्काशौ बभूवतुररिन्दमौ ॥ १४ ॥

प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा ।
हेतिर्दारक्रियार्थे तु परं यत्नमथाकरोत् ॥ १५ ॥

स कालभगिनीं कन्यां भयां नाम भयावहाम् ।
उदावहदमेयात्मा स्वयमेव महामतिः ॥ १६ ॥

स तस्यां जनयामास हेती राक्षसपुङ्गवः ।
पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केश इति श्रुतम् ॥ १७ ॥

विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः ।
व्यवर्धत महातेजास्तोयमध्य इवाम्बुदः ॥ १८ ॥

स यदा यौवनं भद्रमनुप्राप्तो निशाचरः ।
ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥ १९ ॥

सन्ध्यायास्तनयां सोऽथ सन्ध्यातुल्यां प्रभावतः ।
वरयामास पुत्रार्थं हेती राक्षसपुङ्गवः ॥ २० ॥

अवश्यमेव दातव्या परस्मै सेति सन्ध्यया ।
चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥ २१ ॥

सन्ध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः ।
रमते स्म तया सार्धं पौलोम्या मघवानिव ॥ २२ ॥

केनचित्त्वथ कालेन राम सालकटङ्कटा ।
विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २३ ॥

ततः सा राक्षसी गर्भं घनगर्भसमप्रभम् ।
प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम् ॥ २४ ॥

तमुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी ।
रेमे तु सार्धं पतिना विस्मृत्य सुतमात्मजम् ॥ २५ ॥

उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः ।
निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा ॥ २६ ॥

ततो वृषभमास्थाय पार्वत्या सहितः शिवः ।
वायुमार्गेण गच्छन्वै शुश्राव रुदितस्वनम् ॥ २७ ॥

अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम् ।
कारुण्यभावात्पार्वत्या भवस्त्रिपुरसूदनः ॥ २८ ॥

तं राक्षसात्मजं चक्रे मातुरेव वयःसमम् ।
अमरं चैव तं कृत्वा महादेवोऽक्षरोऽव्ययः ॥ २९ ॥

पुरमाकाशगं प्रादात्पार्वत्याः प्रियकाम्यया ।
उमयाऽपि वरो दत्तो राक्षसानां नृपात्मज ॥ ३० ॥

सद्योपलब्धिर्गर्भस्य प्रसूति सद्य एव च ।
सद्य एव वयःप्राप्तिर्मातुरेव वयः समम् ॥ ३१ ॥

ततः सुकेशो वरदानगर्वितः श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः ।
चचार सर्वत्र महान्महामतिः खगं पुरं प्राप्य पुरन्दरो यथा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे चतुर्थः सर्गः ॥

आदितः श्लोकाः 20859 उत्तरकाण्डे आदितः श्लोकाः 135

पञ्चमः सर्गः ॥ ५ ॥

माल्यवदाद्युत्पत्तिः ॥

सुकेशं धार्मिकं दृष्ट्वा वरलब्धं च राक्षसम् ।
ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥

तस्य देववती नाम द्वितीया श्रीरिवात्मजा ।
त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ॥ २ ॥

तां सुकेशाय धर्मेण ददौ रक्षःश्रियं यथा ॥ ३ ॥

वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियम् ।
आसीद्देववती तुष्टा धनं प्राप्येव दुर्गतः ॥ ४ ॥

स तया सह संयुक्तो रराज रजनीचरः ।
अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः ॥ ५ ॥

देववत्यां सुकेशस्तु जनयामास राघव ।
त्रींस्त्रिनेत्रसमान्पुत्रान्राक्षसान्राक्षसाधिपः ॥
माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् ॥ ६ ॥

त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः ।
विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव ॥ ७ ॥

वरप्राप्तिं पितुस्ते तु ज्ञात्वेश्वरतपोबलात् ।
तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः ॥ ८ ॥

प्रगृह्य नियमान्घोरान्राक्षसा नृपसत्तम ।
विचेरुस्ते तपो घोरं सर्वभूतभयावहम् ॥ ९ ॥

सत्यार्जवशमोपेतैस्तपोभिरतिदुष्करैः ।
सन्तापयन्तस्त्रींल्लोकान्सदेवासुरमानुषान् ॥ १० ॥

ततो विभुश्चतुर्वक्त्रो विमानवरमास्थितः ।
सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत ॥ ११ ॥

ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् ।
ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः ॥ १२ ॥

तपसाऽऽराधितो देव यदि नो दिशसे वरम् ।
अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ॥
प्रभविष्णवो भवामेति परस्परमनुव्रताः ॥ १३ ॥

एवं भविष्यतीत्युक्त्वा सुकेशतनयान्विभुः ।
स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १४ ॥
वरं लब्ध्वा तु ते सर्वे राम रात्रिञ्चरास्तदा ।
सुरासुरान्प्रबाधन्ते वरदानसुनिर्भयाः ॥ १५ ॥
तैर्वध्यमानास्त्रिदशाः सर्षिसङ्घाः सचारणाः ।
त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १६ ॥
अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययम् ।
ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ॥ १७ ॥
गृहकर्ता भवानेव देवानां हृदयेप्सितम् ॥ १८ ॥
अस्माकमपि तावत्त्वं गृहं कुरु महामते ।
हिमवन्तमपाश्रित्य मेरुं मन्दरमेव वा ॥
महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् ॥ १९ ॥
विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः ।
निवासं कथयामास शक्रस्येवामरावतीम् ॥ २० ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ।
सुवेल इति चाप्यन्यो द्वितीयस्तत्र सत्तमाः ॥ २१ ॥
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे ।
शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि ॥ २२ ॥
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ।
स्वर्णप्राकारसंवीता हेमतोरणसंवृता ॥
मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥ २३ ॥

तस्यां वसत दुर्धर्षा यूयं राक्षसपुङ्गवाः ॥ २४ ॥

सेन्द्रा दिवौकस इव समासाद्यामरावतीम् ।
लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः ॥
भविष्यथ दुराधर्षाः शत्रूणां शत्रुसूदनाः ॥ २५ ॥

विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः ।
सहस्रानुचरा भूत्वा गत्वा तामवसन्पुरीम् ॥ २६ ॥

दृढप्राकारपरिखां हैमैर्गृहशतैर्युताम् ।
लङ्कामवाप्य ते हृष्टा न्यवसन्रजनीचराः ॥ २७ ॥

एतस्मिन्नेव काले तु यथाकामं च राघव ।
नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ॥ २८ ॥

तस्याः कन्यात्रयं ह्यासीद्धीश्रीकीर्तिसमद्युति ॥ २९ ॥

ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ।
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः ॥
त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥ ३० ॥

दत्ता मात्रा महाभागा नक्षत्रे भगदैवते ॥ ३१ ॥

कृतदारास्तु ते राम सुकेशतनयास्तदा ।
चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः ॥ ३२ ॥

ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी ॥ ३३ ॥

स तस्यां जनयामास यदपत्यं निबोध तत् ॥ ३४ ॥

वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ।
सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च ॥
अनला चाभवत्कन्या सुन्दर्या राम सुन्दरी ॥ ३५ ॥

सुमालिनोऽपि भार्याऽऽसीत्पूर्णचन्द्रनिभानना ।
नाम्ना केतुमती नाम प्राणेभ्योऽपि गरीयसी ॥ ३६ ॥

सुमाली जनयामास यदपत्यं निशाचरः ।
केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥ ३७ ॥

प्रहस्तोऽकम्पनश्चैव विकटः कालकार्मुकः ।
धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ३८ ॥

संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः ।
राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ॥ ३९ ॥

कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः ॥ ४० ॥

मालेस्तु वसुधा नाम गन्धर्वी रूपशालिनी ।
भार्याऽऽसीत्पद्मपत्राक्षी स्वक्षी यक्षीवरोपमा ॥ ४१ ॥

सुमालेरनुजस्तस्यां जनयामास यत्प्रभो ।
अपत्यं कथ्यमानं तु मया त्वं शृणु राघव ॥ ४२ ॥

अनिलश्चानलश्चैव हरः सम्पातिरेव च ।
एते विभीषणामात्या मालेयास्तु निशाचराः ॥ ४३ ॥

ततस्तु ते राक्षसपुङ्गवास्त्रयो निशाचरैः पुत्रशतैश्च संवृताः ।
सुरान्सहेन्द्रानृषिनागयक्षान्बबाधिरे तान्बलवीर्यदर्पिताः ॥
जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमाः समाहिताः ।
वरप्रदानादतिगर्विता भृशं क्रतुक्रियाणां प्रशमङ्कराः सदा ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे पञ्चमः सर्गः ॥

आदितः श्लोकाः 20904 उत्तरकाण्डे आदितः श्लोकाः 180

## षष्ठः सर्गः ॥ ६ ॥

विष्णुमाल्यवदादियुद्धम् ॥

तैर्वध्यमाना देवाश्च ऋषयश्च तपोधनाः ।
भयार्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १ ॥

ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् ।
ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ २ ॥

सुकेशपुत्रैर्भगवन्पितामहवरोद्धतैः ।
प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ३ ॥

शरण्यान्यशरण्यानि ह्याश्रमाणि कृतानि नः ।
स्वर्गाच्च देवान्प्रच्याव्य स्वर्गे क्रीडन्ति देववत् ॥ ४ ॥

अहं विष्णुरहं रुद्रो ब्रह्माहं देवराडहम् ।
अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ५ ॥

इति ते राक्षसा देवान् वरदानेन दर्पिताः ।
बाधन्ते समरोद्धर्षा ये च तेषां पुरस्सराः ॥ ६ ॥

तन्नो देव भयार्तानामभयं दातुमर्हसि ।
अशिवं वपुरास्थाय जहि वै देवकण्टकान् ॥ ७ ॥

इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः ।
सुकेशं प्रति सापेक्षः प्राह देवगणान्प्रभुः ॥ ८ ॥

अहं तान्न हनिष्यामि मयाऽवध्या हि तेऽसुराः ।
किंतु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति ॥ ९ ॥

यूयमिन्द्रं महाभागं पुरस्कृत्य सुरर्षयः ।
गच्छध्वं शरणं विष्णुं हनिष्यति स तान्प्रभुः ॥ १० ॥

ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् ।
विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ ११ ॥

शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च ।
ऊचुः संभ्रान्तवद्वाक्यं सुकेशतनयान्प्रति ॥ १२ ॥

सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसन्निभैः ।
आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १३ ॥

लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता ।
तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥ १४ ॥

स त्वमस्मद्धितार्थाय जहि तान्मधुसूदन ।
शरणं त्वां वयं प्राप्ता गतिर्भव सुरेश्वर ॥ १५ ॥

चक्रकृत्तास्यकमलान्निवेदय यमाय वै ।
भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता विना ॥ १६ ॥

राक्षसान्समरे दुष्टान्सानुबन्धान्मदोद्धतान् ।
नुद त्वं नो भयं देव नीहारमिव भास्करः ॥ १७ ॥

इत्येवं दैवतैरुक्तो देवदेवो जनार्दनः ।
अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १८ ॥

सुकेशं राक्षसं जाने ईशानवरदर्पितम् ।
तांश्चास्य तनयाञ्जाने येषां ज्येष्ठः स माल्यवान् ॥ १९ ॥

तानहं समतिक्रान्तमर्यादान्राक्षसाधमान् ।
निहनिष्यामि संक्रुद्धः सुरा भवत विज्वराः ॥ २० ॥

इत्युक्तास्ते सुराः सर्वे विष्णुना प्रभविष्णुना ।
यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनम् ॥ २१ ॥

विबुधानां समुद्योगं माल्यवांस्तु निशाचरः ।
श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २२ ॥

अमरा ऋषयश्चैव सङ्गम्य किल शङ्करम् ।
अस्मद्वधं परीप्सन्त इदं वचनमब्रुवन् ॥ २३ ॥

सुकेशतनया देव वरदानबलोद्धताः ।
बाधन्तेऽस्मान्समुद्दृप्ता घोररूपाः पदे पदे ॥ २४ ॥

राक्षसैरभिभूताः स्म न शक्ताः स्म प्रजापते ।
स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥ २५ ॥

तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन ।
राक्षसान्हुंकृतेनैव दह प्रदहतां वर ॥ २६ ॥

इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः ।
शिरः करं च धून्वान इदं वचनमब्रवीत् ॥ २७ ॥

अवध्या मम ते देवाः सुकेशतनया रणे ।
मन्त्रं तु वः प्रदास्यामि यस्तान्वै निहनिष्यति ॥ २८ ॥

योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः ।
हरिर्नारायणः श्रीमाञ्छरणं तं प्रपद्यथ ॥ २९ ॥

हरादवाप्य ते मन्त्रं कामारिमभिवाद्य च ।
नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ ३० ॥

ततो नारायणेनोक्ता देवा इन्द्रपुरोगमाः ।
सुरारींस्तान्हनिष्यामि सुरा भवत विज्वराः ॥ ३१ ॥

देवानां भयभीतानां हरिणा राक्षसर्षभौ ।
प्रतिज्ञातो वधोऽस्माकं चिन्त्यतां यदिह क्षमम् ॥ ३२ ॥

ततः सुमाली माली च श्रुत्वा माल्यवतो वचः ।
ऊचतुर्भ्रातरं ज्येष्ठं भगांशाविव वासवम् ॥ ३३ ॥

स्वधीतं दत्तमिष्टं तु चैश्वर्यं परिपालितम् ।
आयुर्निरामयं प्राप्तं सुधर्मः प्रापितः पथि ॥ ३४ ॥

देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च ।
जिता द्विषो ह्यप्रतिमास्तन्नो मृत्युकृतं भयम् ॥ ३५ ॥

नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा ।
अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ॥ ३६ ॥

विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर ।
देवानामेव दोषेण विष्णोः प्रचलित मनः ॥ ३७ ॥

तस्मादद्य समुद्युक्ताः सर्वसैन्यसमावृताः ।
देवानेव जिघांसाम एभ्यो दोषः समुत्थितः ॥ ३८ ॥

उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुङ्गवाः ।
युद्धाय निर्ययुः क्रुद्धा जृम्भवृत्रबला इव ॥ ३९ ॥

स्यन्दनैर्वारणैश्चैव हयैश्च गिरिसन्निभैः ।
खरैर्गोभी रथोष्ट्रैश्च शिंशुमारैर्भुजङ्गमैः ॥ ४० ॥

मकरैः कच्छपैर्मीनैर्विहङ्गैर्गरुडोपमैः ।
सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि ॥ ४१ ॥

रथैर्हयैरुह्यमानाः शतधा च सहस्रधा ।
प्रयाता राक्षसास्तूर्णं देवलोकजिघांसवः ॥ ४२ ॥

त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः ।
प्रयता देवलोकाय योद्धुं दैवतशत्रवः ॥ ४३ ॥

लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ ।
रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ॥ ४४ ॥

भूतानि भयदर्शीनि विषमस्थानि सर्वशः ।
भौमाश्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः ॥
उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ४५ ॥

अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च ।
वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः ॥ ४६ ॥

अट्टहासान्विमुञ्चन्तो घननादसमस्वनाः ।
वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥ ४७ ॥

गृध्रचक्रं महच्चात्र ज्वलनोद्गारिभिर्मुखैः ।
रक्षोगणस्योपरिष्टात्परिबभ्राम कालवत् ॥ ४८ ॥

काका वाश्यन्ति तत्रैव बिडाला वै द्विपादयः ।
कपोता रक्तपादाश्च शारिका विद्रुता ययुः ॥ ४९ ॥

उत्पातांस्ताननादृत्य राक्षसा बलगर्विताः ।
यान्त्येव न निवर्तन्ते मृत्युपाशावपाशिताः ॥ ५० ॥

माल्यवांश्च सुमाली च माली च सुमहाबलाः ।
आसन्पुरःसरास्तेषां क्रतूनामिव पावकाः ॥ ५१ ॥

माल्यवन्तं च ते सर्वे माल्यवन्तमिवाचलम् ।
निशाचरा ह्याश्रयन्ति धातारमिव देवताः ॥ ५२ ॥

तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् ।
जयेप्सया देवलोकं ययौ मालिवशे स्थितम् ॥ ५३ ॥

राक्षसानां समुद्योगं तं तु नारायणः प्रभुः ।
देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः ॥ ५४ ॥

स सज्जायुधतूणीरो वैनतेयोपरि स्थितः ।
आसज्य कवचं दिव्यं सहस्रार्कसमद्युति ॥ ५५ ॥

आबध्य शरसम्पूर्णे इषुधी विमले तदा ।
श्रोणीसूत्रं च खड्गं च विमलं कमलेक्षणः ॥ ५६ ॥

शङ्खचक्रगदाशार्ङ्गखड्गासिप्रवरायुधः ।
राक्षसानामभावाय ययौ तूर्णतरं प्रभुः ॥ ५७ ॥

सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः ।
काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥ ५८ ॥

स सिद्धदेवर्षिमहोरगैश्च गन्धर्वयक्षैरुपगीयमानः ।
समाससादासुरसैन्यशत्रूश्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥

सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम् ।
चचाल तद्राक्षसराजसैन्यं चलोपलं नील इवाचलेन्द्रः ॥

ततः शरैः शोणितमांसरूषितैर्युगान्तवैश्वानरतुल्यविग्रहैः ।
निशाचराः संपरिवार्य माधवं वरायुधैर्निर्बिभिदुः सहस्रशः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे षष्ठः सर्गः ॥

आदितः श्लोकाः 20965 उत्तरकाण्डे आदितः श्लोकाः 241

## सप्तमः सर्गः ॥ ७ ॥

### मालिवधः ॥

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः ।
ववर्षुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥

श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तञ्चरोत्तमैः ।
वृतोऽञ्जनगिरीवासीद्वर्षमाणैः पयोधरैः ॥ २ ॥

शलभा इव केदारं मशका इव पर्वतम् ।
यथाऽमृतघटं दंशा मकरा इव चार्णवम् ॥ ३ ॥

तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः ।
हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥

स्यन्दनैः स्यन्दनगता गजैश्च गजपृष्ठगाः ।
अश्वारोहास्तथाऽश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५ ॥

राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः ।
निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजम् ॥ ६ ॥

निशाचरैस्ताड्यमाने मीनैरिव महोदधिः ।
शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्योऽसृजच्छरान् ॥ ७ ॥

शरैः पूर्णायतोत्सृष्टैर्वज्रवक्त्रैर्मनोजवैः ।
चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८ ॥

विद्राव्य शरवर्षेण वर्षं वायुरिवोत्थितम् ।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९ ॥

सोऽम्बुजो हरिणा ध्मातः सर्वप्राणेन शङ्खराट् ।
ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥ १० ॥

शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् ।
मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११ ॥

न शेकुरश्वाः संस्थातुं विमदाः कुञ्जराऽभवन् ।
स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः ॥ १२ ॥

शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः ।
विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम् ॥ १३ ॥

भिद्यमानाः शरैः सङ्ख्ये नारायणकरच्युतैः ।
निपेतू राक्षसा भूमौ शैला वज्रहता इव ॥ १४ ॥

व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि वै ।
असृक् क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः ॥ १५ ॥

शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा ।
राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः ॥ १६ ॥

तेषां शिरोधरान्धूताञ्छरध्वजधनूंषि च ।
रथान्पताकास्तूणीरांश्चिच्छेद स हरिः शरैः ॥ १७ ॥

सूर्यादिव करा घोरा ऊर्मयः सागरादिव ।
पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात् ॥ १८ ॥

तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरिताः ।
निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः ॥ १९ ॥

शरभेण यथा सिंहाः सिंहेन द्विरदा यथा ।
द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा ॥ २० ॥

द्वीपिनेव यथा श्वानः शुना मार्जारका यथा ।
मार्जारेण यथा सर्पाः सर्पेण च यथाऽऽखवः ॥ २१ ॥

तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना ।
द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले ॥ २२ ॥

राक्षसानां सहस्राणि निहत्य मधुसूदनः ।
वारिजं पूरयामास तोयदं सुरराडिव ॥ २३ ॥

नारायणशरत्रस्तं शङ्खनादसुविह्वलम् ।
ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम् ॥ २४ ॥

प्रभग्ने राक्षसबले नारायणशराहते ।
सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५ ॥

उत्क्षिप्य लम्बाभरणं धुन्वन्करमिव द्विपः ।
ररास राक्षसो हर्षात्सतडित्तोयदो यथा ॥ २६ ॥

सुमालेर्नर्दतस्तस्य शिरो ज्वलितकुण्डलम् ।
चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २७ ॥

तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः ।
इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ २८ ॥

हते सुमालेरश्वैश्च रथे विष्णुरथं प्रति ।
माली चाभ्यद्रवद्युक्तः प्रगृह्य सशरं धनुः ॥ २९ ॥

मालेर्धनुश्च्युता बाणाः कार्तस्वरविभूषिताः ।
विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३० ॥

अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः ।
चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३१ ॥

अथ मौर्वीस्वनं श्रुत्वा भगवान्भूतभावनः ।
मालिनं प्रति बाणौघान्ससर्जारिनिषूदनः ॥ ३२ ॥

ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः ।
पिबन्ति रुधिरं तस्य नागा इव सुधारसम् ॥ ३३ ॥

मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः ।
मालिमौलिं ध्वजं चापं वाजिनश्चाप्यपातयत् ॥ ३४ ॥

विरथस्तु गदां गृह्य माली नक्तञ्चरोत्तमः ।
आपुप्लुवे गदापाणिर्गिर्यग्रादिव केसरी ॥ ३५ ॥

गदया गरुडेशानमीशानमिव चान्तकः ।
ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाऽचलम् ॥ ३६ ॥

गदयाऽभिहतस्तेन मालिना गरुडो भृशम् ।
रणात्पराङ्मुखं देवं कृतवान्वेदनातुरः ॥ ३७ ॥

पराङ्मुखे कृते देवे मालिना गरुडेन वै ।
उदतिष्ठन्महाञ्छब्दो रक्षसामभिनर्दताम् ॥३८॥

रक्षसां रवतां रावं श्रुत्वा हरिहयानुजः ।
तिर्यगास्थाय संक्रुद्धः पक्षीशे भगवान्हरिः ॥
पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया ॥ ३९ ॥

तत्सूर्यमण्डलाभासं स्वभासा भासयन्नभः ।
कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् ॥ ४० ॥

तच्छिरो राक्षसेन्द्रस्य चक्रकृत्तं विभीषणम् ।
पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४१ ॥

ततः सुरैः सुसंहृष्टैः सर्वप्राणसमीरितः ।
सिंहनादरवोन्मुक्तः साधु देवेति वादिभिः ॥ ४२ ॥

मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि ।
सबलौ शोकसन्तप्तौ लङ्कामेव प्रधावितौ ॥ ४३ ॥

गरुडस्तु समाश्वस्तः सन्निवृत्य यथा पुरा ।
राक्षसान्द्रावयामास पक्षवातेन कोपितः ॥ ४४ ॥

नारायणो बाणवराशनीभिर्विदारयामास धनुर्विमुक्तैः ।
नक्तञ्चरान्मुक्तविधूतकेशान्यथाऽशनीभिः सतडिन्महाभ्राः ॥

भिन्नातपत्रं पतमानमस्त्रं शरैरपध्वस्तविनीतवेषम् ।
विनिस्सृतान्त्रं भयलोलनेत्रं बलं तदुन्मत्ततरं बभूव ॥

सिंहार्दितानामिव कुञ्जराणां निशाचराणां सहकुञ्जराणाम् ।
रवाश्च वेगाश्च समं बभूवुः पुराणसिंहेन विमर्दितानाम् ॥

सम्बाध्यमाना हरिबाणजालैः सबाणजालानि समुत्सृजन्तः ।
धावन्ति नक्तञ्चरकालमेघा वायुप्रभिन्ना इव कालमेघाः ॥

चक्रप्रहारैर्विनिकृत्तशीर्षाः संचूर्णिताङ्गाश्च गदाप्रहारैः ।
असिप्रहारैर्द्विविधा विभिन्नाः पतन्ति शैला इव राक्षसेन्द्राः ॥

चक्रकृत्तास्यकमला गदासंचूर्णितोरसः ।
लाङ्गलग्लपितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ५० ॥

केचिच्चैवासिना छिन्नास्तथाऽन्ये शरपीडिताः ।
निपेतुरम्बराचूर्णं राक्षसाः सागराम्भसि ॥ ५१ ॥

विलम्बमानैर्मणिहारकुण्डलैर्निशाचरैर्नीलबलाहकोपमैः ।
निपात्यमानैर्ददृशे निरन्तरं निपात्यमानैरिव नीलपर्वतैः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे सप्तमः सर्गः ॥

आदितः श्लोकाः 21017 उत्तरकाण्डे, आदितः श्लोकाः 293

## अष्टमः सर्गः ॥ ८ ॥

### माल्यादिपराजयः ॥

हन्यमाने बले तस्मिन्पद्मनाभेन पृष्ठतः ।
माल्यवान्संनिवृत्तोऽथ वेलामेत्य महार्णवः ॥ १ ॥

संरक्तनयनः कोपाच्चलन्मौलिर्निशाचरः ।
पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २ ॥

नारायण न जानीषे क्षात्रधर्मं पुरातनम् ।
अयुद्धमनसो भीतानस्मान्हंसि यथेतरः ॥ ३ ॥

पराङ्मुखवधं पापं यः करोत्यसुरेतर ।
स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४ ॥

युद्धश्रद्धाऽथवा तेऽस्ति शङ्खचक्रगदाधर ।
अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत्तव ॥ ५ ॥

माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलम् ।
उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥

युष्मत्तो भयभीतानां देवानां वै मयाऽभयम् ।
राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥

प्राणैरपि प्रियं कार्यं देवानां हि सदा मया ।
सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥

देवदेवं ब्रुवाणं तं रक्ताम्बुरुहलोचनम् ।
शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९ ॥

माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना ।
हरेरुरसि बभ्राज मेघस्थेव शतहृदा ॥ १० ॥

ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः ।
माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥

स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता ।
काङ्क्षन्ती राक्षसं प्रायान्माहेन्द्रीवाञ्जनाचलम् ॥ १२ ॥

सा तस्योरसि विस्तीर्णे हारभासाऽवभासिते ।
अपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३ ॥

तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः ।
माल्यवान्पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥

ततः कार्ष्णायसं शूलं कण्टकैर्बहुभिश्चितम् ।
प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५ ॥

तथैव रणरक्तस्तु मुष्टिना वासवानुजम् ।
ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥

ततोऽम्बरे महाञ्छब्दः साधु साध्विति चोदितः ।
आहत्य राक्षसा विष्णुं गरुडं चाप्यताडयत् ॥ १७ ॥

वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम् ।
व्यपोहद्बलवान्वायुः शुष्कपर्णचयं यथा ॥ १८ ॥

द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम् ।
सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥

पक्षवातबलोद्धूतो माल्यवानपि राक्षसः ।
स्वबलेन समागम्य ययौ लङ्कां ह्रिया वृतः ॥ २० ॥

एवं ते राक्षसास्तेन हरिणा कमलेक्षण ।
बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१ ॥

अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं भयार्दिताः ।
त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥ २२ ॥

सुमालिनं समासाद्य राक्षसं रघुसत्तम ।
स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटङ्कटे ॥ २३ ॥

ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः ।
सुमाली माल्यवान्माली ये च तेषां पुरःसराः ॥
सर्वे तेभ्यो महाभाग रावणाद्बलवत्तराः ॥ २४ ॥

न चान्यो राक्षसान्हन्ता सुरारीन्देवकण्टकान् ।
ऋते नारायणं देवं शङ्खचक्रगदाधरम् ॥ २५ ॥

भवान्नारायणो देवश्चतुर्बाहुः सनातनः ।
राक्षसान्हन्तुमुत्पन्नो ह्यजेयः प्रभुरव्ययः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे अष्टमः सर्गः

आदितः श्लोकाः 21043 उत्तरकाण्डे आदितः श्लोकाः 319

## नवमः सर्गः ॥ ९ ॥

रावणाद्युत्पत्तिः ॥

केनचित्त्वथ कालेन सुमाली नाम राक्षसः ।
रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥ १ ॥

नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः ।
कन्यां दुहितरं गृह्य विना पद्ममिव श्रियम् ॥ २ ॥

राक्षसेन्द्रः स तु यदा व्यचरद्वै महीतलम् ।
तदाऽपश्यच्च गच्छन्तं पुष्पकेण धनेश्वरम् ॥ ३ ॥

तं दृष्ट्वाऽमरसङ्काशं स्वच्छन्दं तपनोपमम् ।
रसातलं प्रविष्टः सन्मर्त्यलोकात्सविस्मयः ॥
हितार्थं चिन्तयामास राक्षसानां महामतिः ॥ ४ ॥

किं कृतं श्रेय इत्येव वर्धेमहि कथं वयम् ।
अथाब्रवीत्सुतां रक्षः कैकसीं नाम नामतः ॥ ५ ॥

पुत्रि प्रदानकालोऽयं यौवनं तेऽतिवर्तते ।
प्रत्याख्यानाच्च भीतैस्त्वं न वरैः प्रतिगृह्यसे ॥ ६ ॥

त्वत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः ।
त्वं हि सर्वगुणोपेता श्रीः साक्षादिव पुत्रिके ॥ ७ ॥

कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ॥ ८ ॥

न ज्ञायते च कः कन्यां वरयेदिति कन्यके ॥ ९ ॥

मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं सदा कन्या संशये स्थाप्य तिष्ठति ॥ १० ॥

सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम् ।
भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम् ॥ ११ ॥

ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः ।
तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ॥ १२ ॥

सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात् ।
तत्रोपागम्य सा तस्थौ विश्रवा यत्र तप्यते ॥ १३ ॥

एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः ।
अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥ १४ ॥

सा तु तां दारुणां वेलां विचिन्त्य पितृगौरवात् ।
उपसृत्याग्रतस्तस्य चरणाधोमुखी स्थिता ॥
विलिखन्ती मुहुर्भूमिमङ्गुष्ठाग्रेण भामिनी ॥ १५ ॥

स तु तां प्रेक्ष्य सुश्रोणीं पूर्णचन्द्रनिभाननाम् ।
अब्रवीत्परमोदारो दीप्यमानां स्वतेजसा ॥ १६ ॥

भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता ।
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि शोभने ॥ १७ ॥

एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् ।
आत्मप्रभावेन मुने ज्ञातुमर्हसि मे मतम् ॥ १८ ॥

किं तु मां विद्धि ब्रह्मर्षे शासनात्पितुरागताम् ।
कैकसी नाम नाम्नाऽहं शेषं त्वं ज्ञातुमर्हसि ॥ १९ ॥

स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह ।
विज्ञातं ते मया भद्रे कारणं यन्मनोगतम् ॥ २० ॥

सुताभिलाषो मत्तस्ते मत्तमातङ्गगामिनि ।
दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता ॥ २१ ॥

शृणु तस्मात्सुतान्भद्रे यादृशाञ्जनयिष्यसि ।
दारुणान्दारुणाकारान्दारुणाभिजनप्रियान् ॥ २२ ॥

प्रसविष्यसि सुश्रोणि राक्षसान्क्रूरकर्मणः ।
सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः ॥ २३ ॥

भगवन्नीदृशान्पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः ।
नेच्छामि सुदुराचारान्प्रसादं कर्तुमर्हसि ॥ २४ ॥

कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुङ्गवः ।
उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम् ॥ २५ ॥

अथाब्रवीन्मुनिस्तत्र पश्चिमो यस्तवात्मजः ।
मम वंशानुरूपः स धर्मात्मा च भविष्यति ॥ २६ ॥

एवमुक्ता तु सा कन्या राम कालेन केनचित् ।
जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥ २७ ॥

दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् ।
ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥ २८ ॥

तस्मिञ्जाते तु तत्काले सज्वालकबलाः शिवाः ।
क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः ॥ २९ ॥

ववर्ष रुधिरं देवो मेघाश्च खरनिस्वनाः ।
न प्रभाति च खे सूर्यो महोल्काश्चापतन्क्षितौ ॥ ३० ॥

अथ नामाकरोत्तस्य पितामहसमः पिता ।
दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति ॥ ३१ ॥

तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः ।
प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते ॥ ३२ ॥

ततः शूर्पणखा नाम सञ्जज्ञे विकृतानना ।
विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥ ३३ ॥

तौ तु तत्र महारण्ये ववृधाते महौजसौ ।
कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ ३४ ॥

कुम्भकर्णः प्रमत्तस्तु महर्षीन्धर्मवत्सलान् ।
त्रैलोक्यं भक्षयन्नित्यं संतुष्टो विचचार ह ॥ ३५ ॥

विभीषणस्तु धर्मात्मा नित्यं धर्मे व्यवस्थितः ।
स्वाध्यायनियताहार उवास विजितेन्द्रियः ॥ ३६ ॥

अथ वैश्रवणो देवस्तत्र कालेन केनचित् ।
आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः ॥ ३७ ॥

तं दृष्ट्वा कैकसी तत्र ज्वलन्तमिव तेजसा ।
आस्थाय राक्षसीं बुद्धिं दशग्रीवमुवाच ह ॥ ३८ ॥

पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतम् ।
भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशम् ॥ ३९ ॥

दशग्रीव तथा यत्नं कुरुष्वामितविक्रम ।
यथा त्वमसि मे पुत्र भव वैश्रवणोपमः ॥ ४० ॥

मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् ।
अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत्तदा ॥ ४१ ॥

सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोऽपि वा ।
भविष्याम्यचिरान्मातः सन्तापं त्यज हृद्गतम् ॥ ४२ ॥

इत्युक्त्वा मातरं राम दशग्रीवः सहानुजः ।
आगच्छदर्थसिद्ध्यर्थं गोकर्णं नाम पर्वतम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे नवमः सर्गः ॥

आदितः श्लोकाः 21086 युद्धकाण्डे आदितः श्लोकाः 362

## दशमः सर्गः ॥ १० ॥

### रावणादिवरप्राप्तिः ॥

अथाब्रवीद्द्विजं रामः कथान्ते भ्रातरो वने ।
कीदृशं तु तदा ब्रह्मंस्तपश्चेरुर्महाव्रताः ॥ १ ॥

अगस्त्यस्त्वब्रवीत्तत्र रामं सुप्रीतमानसम् ।
तांस्तान्धर्मविधींस्तत्र भ्रातरस्ते समाविशन् ॥ २ ॥

कुम्भकर्णस्ततो यत्तो नित्यं धर्मपथे स्थितः ।
ततापं ग्रैष्मके काले वीरः पञ्चाग्निमध्यगः ॥ ३ ॥

मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत ।
नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४ ॥

एवं वर्षसहस्राणि दश तस्यातिचक्रमुः ।
धर्मे प्रयतमानस्य सत्पथे निष्ठितस्य च ॥ ५ ॥

विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः ।
पञ्च वर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ६ ॥

समाप्ते नियमे तस्य ननृतुश्चाप्सरोगणाः ।
पपात पुष्पवर्षं च क्षुभिताश्चापि देवताः ॥ ७ ॥

पञ्च वर्षसहस्राणि सूर्यं चैवान्ववर्तत ।
तस्थौ चोर्ध्वशिरोबाहुः स्वाध्यायधृतमानसः ॥ ८ ॥

एवं विभीषणस्यापि स्वर्गस्थस्येव नन्दने ।
दश वर्षसहस्राणि गतानि नियतात्मनः ॥ ९ ॥

दश वर्षसहस्राणि निराहारो दशाननः ।
पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः ॥ १० ॥

एवं वर्षसहस्राणि नव तस्यातिचक्रमुः ।
शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् ॥ ११ ॥

अथ वर्षसहस्रे तु दशमे दशमं शिरः ।
छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः ॥ १२ ॥

पितामहस्तु धर्मात्मा सार्धं देवैरुपस्थितः ।
तात वत्स दशग्रीव प्रीतोऽस्मीत्यभ्यभाषत ॥ १३ ॥

शीघ्रं वरय धर्मज्ञ वरो यस्तेऽभिकाङ्क्षितः ।
तं ते कामं करोम्यद्य न वृथा ते परिश्रमः ॥ १४ ॥

अथाब्रवीद्दशग्रीवः पितामहमुपागतम् ।
प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५ ॥

भगवन्प्राणिनां नित्यं नान्यत्र मरणाद्भयम् ।
नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ १६ ॥

एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह ।
नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ १७ ॥
सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् ।
अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत ॥ १८ ॥
न हि चिन्ता ममान्येषु प्राणिष्वमरपूजित ।
तृणभूता हि ते मन्ये प्राणिनो मानुषादयः ॥ १९ ॥
एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा ।
उवाच वचनं देवः सह देवैः पितामहः ॥
भविष्यत्येवमेतत्ते वचो राक्षसपुङ्गव ॥ २० ॥
शृणु चापि वचो भूयः प्रीतस्येह शुभं मम ॥ २१ ॥
हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयाऽनघ ।
पुनस्तानि भविष्यन्ति तथैव तव राक्षस ॥ २२ ॥
वितरामीह ते सौम्य वरं चान्यं दुरासदम् ॥ २३ ॥
छन्दतस्तव रूपं च मनसा यद्यथेप्सितम् ।
भविष्यति न संदेहो मद्वरात्तव राक्षस ॥ २४ ॥
एवं पितामहोक्तस्य दशग्रीवस्य रक्षसः ।
अग्नौ हुतानि शीर्षाणि यानि तान्युत्थितानि वै ॥ २५ ॥
एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ।
विभीषणमथोवाच वाक्यं लोकपितामहः ॥ २६ ॥
विभीषण त्वया वत्स धर्मसंहितबुद्धिना ।
परितुष्टोऽस्मि धर्मात्मन्वरं वरय सुव्रत ॥ २७ ॥

विभीषणस्तु धर्मात्मा प्रोवाच प्रणतो वचः ।
वृतः सर्वगुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा ॥ २८ ॥
भगवन्कृतकृत्योऽहं यन्मे लोकगुरुः स्वयम् ।
प्रीतेन यदि दातव्यो वरो मे शृणु सुव्रत ॥ २९ ॥
परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ।
अशिक्षितं च ब्रह्मास्त्रं भगवन्प्रतिभातु मे ॥ ३० ॥
या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च ।
सा सा भवतु धर्मिष्ठा तं तु धर्मं च पालये ॥ ३१ ॥
एष मे परमोदार वरः परमको मतः ।
न हि धर्माभिरक्तानां लोके किञ्चन दुर्लभम् ॥ ३२ ॥
पुनः प्रजापतिः प्रीतो विभीषणमुवाच ह ।
धर्मिष्ठस्त्वं यथा वत्स तथा चैतद्भविष्यति ॥ ३३ ॥
यस्माद्राक्षसयोनौ ते जातस्यामित्रनाशन ।
नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥ ३४ ॥
कुम्भकर्णाय तु वरं प्रयच्छन्तमरिन्दम ।
प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३५ ॥
न तावत्कुम्भकर्णाय प्रदातव्यो वरस्त्वया ।
जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः ॥ ३६ ॥
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश ।
अनेन भक्षिता ब्रह्मन्नृषयो मानुषादयः ॥ ३७ ॥
वरव्याजेन मोहो हि दीयतामस्य रक्षसः ।
लोकानां स्वस्ति चैवं स्याद्भवेदस्य च सम्मतिः ॥ ३८ ॥

एवमुक्तः सुरैर्ब्रह्मा देवीमेवान्वचिन्तयत् ।
चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती ॥ ३९ ॥
प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती ।
इयमभ्यागता देव किं कार्यं करवाण्यहम् ॥ ४० ॥
प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम् ।
वाणि त्वं राक्षसेन्द्रास्ये भव या देवतेप्सिता ॥ ४१ ॥
तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् ।
कुम्भकर्ण महाबाहो वरं वरय यो मतः ॥ ४२ ॥
कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् ।
स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ ४३ ॥
एवमस्त्विति तं चोक्त्वा प्रायाद्ब्रह्मा सुरैः समम् ।
देवी सरस्वती चैव राक्षसं तं जहौ पुनः ॥ ४४ ॥
ब्रह्मणा सह देवेषु गतेषु च नभःस्थलम् ।
विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततो गतः ॥ ४५ ॥
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ।
ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम् ॥ ४६ ॥
अहं व्यामोहितो देवैरिति मन्ये तदागतैः ।
एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः ॥
श्लेष्मातकवनं गत्वा तत्र ते न्यवसन्सुखम् ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे दशमः सर्गः ॥

आदितः श्लोकाः 21133 उत्तरकाण्डे आदितः श्लोकाः 409

## एकादशः सर्गः ॥ ११ ॥

### रावणस्य लङ्काप्राप्तिः ॥

सुमाली वरलब्धांस्तु ज्ञात्वा चैतान्निशाचरान् ।
उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥ १ ॥

मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः ।
उदतिष्ठन्सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २ ॥

सुमाली सचिवैः सार्धं वृतो राक्षसपुङ्गवैः ।
अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३ ॥

दिष्ट्या ते वत्स संप्राप्तश्चिन्तितोऽयं मनोरथः ।
यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान्वरमुत्तमम् ॥ ४ ॥

यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् ।
तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५ ॥

असकृत्तद्भयाद्भीताः परित्यज्य स्वमालयम् ।
विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६ ॥

अस्मदीया च लङ्केयं नगरी राक्षसोचिता ।
निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७ ॥

यदि नामात्र शक्यं स्यात्साम्ना दानेन वाऽनघ ।
तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥ ८ ॥

त्वं तु लङ्केश्वरस्तात भविष्यसि न संशयः ।
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल ॥ ९ ॥

अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् ।
वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् ॥ १० ॥

साम्नाऽपि राक्षसेन्द्रेण प्रत्याख्यातो गरीयसा ।
किञ्चिन्नाह तदा रक्षो ज्ञात्वा तस्य चिकीर्षितम् ॥ ११ ॥

कस्यचित्त्वथ कालस्य वसन्तं रावणं ततः ।
उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः
प्रहस्तः प्रश्रितं वाक्यमिदमाह सकारणम् ॥ १२ ॥

दशग्रीव महाबाहो नार्हस्त्वं वक्तुमीदृशम् ।
सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम ॥ १३ ॥

अदितिश्च दितिश्चैव भगिन्यौ सहिते हिते ।
भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १४ ॥

अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ।
दितिस्त्वजनयत्पुत्रान्कश्यपस्यात्मसंभवान् ॥ १५ ॥

दैत्यानां किल धर्मज्ञ पुरीयं सवनार्णवा ।
सपर्वता मही वीर तेऽभवन्प्रभविष्णवः ॥ १६ ॥

निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना ।
देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् ॥ १७ ॥

नैतदेको भवानेव करिष्यति विपर्ययम् ।
सुरासुरैराचरितं तत्कुरुष्व वचो मम ॥ १८ ॥

एवमुक्तो दशग्रीवः प्रहृष्टेनान्तरात्मना ।
चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् ॥ १९ ॥

स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ।
वनं गतो दशग्रीवः सह तैः क्षणदाचरैः ॥ २० ॥

त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः ।
प्रेषयामास दूत्येन प्रहस्तं वाक्यकोविदम् ॥ २१ ॥

प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि नैर्ऋतपुङ्गवम् ।
वचसा मम वित्तेशं सामपूर्वमिदं वचः ॥ २२ ॥

इयं लङ्कापुरी राजन्राक्षसानां महात्मनाम् ।
त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ ॥ २३ ॥

तद्भवान्यदि नो ह्यद्य दद्यादतुलविक्रम ।
कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ॥ २४ ॥

स तु गत्वा पुरीं लङ्कां धनदेन सुरक्षिताम् ।
अब्रवीत्परमोदारं वित्तपालमिदं वचः ॥ २५ ॥

प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत ।
त्वत्समीपं महाबाहो सर्वशस्त्रभृतां वर ॥ २६ ॥

तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद ।
वचनं मम वित्तेश यद्ब्रवीति दशाननः ॥ २७ ॥

इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा ।
भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ॥ २८ ॥

तेन विज्ञाप्यते सोऽयं सांप्रतं विश्रवात्मज ।
तदेषा दीयतां तात याचतस्तस्य सामतः ॥ २९ ॥

प्रहस्तादभिसंश्रुत्य देवो वैश्रवणा वचः ।
प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविशारदः ॥ ३० ॥

दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः ।
निवासिते च मे यक्षैर्दानमानादिभिर्गुणैः ॥ ३१ ॥

ब्रूहि गच्छ दशग्रीवं पुरं राज्यं च यन्मम ।
तवाप्येतन्महाबाहो भुङ्क्ष्व राज्यमकण्टकम् ॥
अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु ॥ ३२ ॥

एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम् ॥ ३३ ॥

अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम् ॥ ३४ ॥

एष तात दशग्रीवो दूतं प्रेषितवान्मम ।
दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता ॥ ३५ ॥

मयाऽत्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥ ३६ ॥

ब्रह्मर्षिस्त्वेवमुक्तोऽसौ विश्रवा मुनिपुङ्गवः ।
प्राञ्जलिं धनदं प्राह शृणु पुत्र वचो मम ॥ ३८ ॥

दशग्रीवो महाबाहुरुक्तवान्मम सन्निधौ ।
मया निर्भर्त्सितश्चासीद्बहुशोक्तः सुदुर्मतिः ॥ ३८ ॥

स क्रोधेन मया चोक्तो ध्वंसते च पुनः पुनः ।
श्रेयोऽभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥ ३९ ॥

वरप्रदानात्संमूढो मान्यामान्यान्स दुर्मतिः ।
न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः ॥ ४० ॥

तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् ।
निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥ ४१ ॥

तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी ।
काञ्चनैः सूर्यसङ्काशैः पङ्कजैः संवृतोदका ॥
कुमुदैरुत्पलैश्चैव तथाऽन्यैश्च सुगन्धिभिः ॥ ४२ ॥

तत्र देवाः सगन्धर्वाः साप्सरोरगकिन्नराः ।
विहारशीलाः सततं रमन्ते सर्वदाऽऽश्रिताः ॥ ४३ ॥

न हि क्षमं तवानेन वैरं धनद रक्षसा ।
जानीषे हि यथाऽनेन लब्धः परमको वरः ॥ ४४ ॥

एवमुक्तो गृहीत्वाऽशु तद्वचः पितृगौरवात् ।
सदारपुत्रः सामात्यः सवाहनधनो गतः ॥ ४५ ॥

प्रहस्तोऽथ दशग्रीवं गत्वा वचनमब्रवीत् ।
प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजम् ॥ ४६ ॥

शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः ।
प्रविश्य तां सहास्माभिः स्वधर्मं प्रतिपालय ॥ ४७ ॥

एवमुक्तो दशग्रीवः प्रहस्तेन महाबलः ।
विवेश नगरीं लङ्कां भ्रातृभिः सबलानुगैः ॥
धनदेन परित्यक्तां सुविभक्तमहापथाम् ॥ ४८ ॥

स चाभिषिक्तः क्षणदाचरैस्तदा
निवेशयामास पुरीं दशाननः ।
निकामपूर्णा च बभूव सा पुरी
निशाचरैर्नीलबलाहकोपमैः ॥ ४९ ॥

धनेश्वरस्त्वथ पितृवाक्यगौरवा-
न्न्यवेशयच्छशिविमले गिरौ पुरीम् ।
स्वलंकृतैर्भवनवरैर्विभूषितां
पुरन्दरस्येव तदाऽमरावतीम् ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे एकादशः सर्गः ॥

आदितः श्लोकाः 21183 उत्तरकाण्डे आदितः श्लोकाः 489

## द्वादशः सर्गः ॥ १२ ॥

### रावणादिविवाहः ॥

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभ्यां सहितस्तदा ।
ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥ १ ॥

स्वसारं कालकेयाय दानवेन्द्राय राक्षसीम् ।
ददौ शूर्पणखां नाम विद्युज्जिह्वाय नामतः ॥ २ ॥

अथ दत्त्वा स्वसारं स मृगयां पर्यटन्नृप ॥ ३ ॥

तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ४ ॥

कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः ।
अपृच्छत्को भवानेको निर्मानुष्यमृगे वने ॥
अनया मृगशाबाक्ष्या किमर्थं सह तिष्ठसि ॥ ५ ॥

मयस्त्वथाब्रवीद्राम पृच्छन्तं तं निशाचरम् ।
श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं मम ॥ ६ ॥

हेमा नामाप्सरास्तात श्रुतपूर्वा यदि त्वया ।
दैवतैर्मम सा दत्ता पौलोमीव शतक्रतोः ॥ ७ ॥

तस्यां सक्तमनास्तात पञ्च वर्षशतान्यहम् ।
सा च दैवतकार्येण त्रयोदश समा गताः ॥ ८ ॥

वर्षं चतुर्दशं चैव ततो हेममयं पुरम् ।
वज्रवैडूर्यचित्रं च मायया निर्मितं मया ॥ ९ ॥

तत्राहमवसं दीनस्तया हीनः सुदुःखितः ।
तस्मात्पुराद्दुहितरं गृहीत्वा वनमागतः ॥ १० ॥

इयं ममात्मजा राजंस्तस्याः कुक्षौ विवर्धिता ।
भर्तारमनया सार्धमस्याः प्राप्तोऽस्मि मार्गितुम् ॥ ११ ॥

कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् ।
कन्या हि द्वे कुले नित्यं संशये स्थाप्य तिष्ठति ॥ १२ ॥

द्वौ सुतौ हि मम त्वस्यां भार्यायां संबभूवतुः ।
मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः ॥ १३ ॥

एवं ते सर्वमाख्यातं यथातत्त्वेन पृच्छतः ।
त्वामिदानीं कथं तात जानीयां को भवानिति ॥ १४ ॥

एवमुक्तं तु तद्रक्षो विनीतमिदमब्रवीत् ।
अहं पौलस्त्यतनयो दशग्रीवश्च नामतः ॥
मुनेर्विश्रवसो यस्तु तृतीयो ब्रह्मणोऽभवत् ॥ १५ ॥

एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः ।
महर्षेस्तनयं ज्ञात्वा मयो हर्षमुपागतः ॥
दातुं दुहितरं तस्मै रोचयमास तत्र वै ॥ १६ ॥

करेण तु करं तस्या ग्राहयित्वा मयस्तदा ।
प्रहसन्प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः ॥ १७ ॥

इयं ममात्मजा राजन्हेमयाऽप्सरसा धृता ।
कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् ॥ १८ ॥

बाढमित्येव तं राम दशग्रीवोऽभ्यभाषत ।
प्रज्वाल्य तत्र चैवाग्निमकरोत्पाणिसंग्रहम् ॥ १९ ॥

स हि तस्य मयो राम शापाभिज्ञस्तपोधनात् ।
विदित्वा तेन सा दत्ता तस्य पैतामहं कुलम् ॥ २० ॥

अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् ।
परेण तपसा लब्धां जघ्निवाँल्लक्ष्मणं यया ॥ २१ ॥

एवं स्वीकृतदारो वै लङ्काया ईश्वरः प्रभुः ।
गत्वा तु नगरीं भार्ये भ्रातृभ्यां समुपाहरत् ॥ २२ ॥

वैरोचनस्य दौहित्रीं वज्रज्वालेति नामतः ।
तां भार्यां कुम्भकर्णस्य रावणः समकल्पयत् ॥ २३ ॥
गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ।
सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः ॥ २४ ॥
तीरे तु सरसो वै तु सञ्जज्ञे मानसस्य हि ।
सरस्तदा मानसं तु ववृधे जलदागमे ॥ २५ ॥
मात्रा तु तस्याः कन्यायाः स्नेहेनाक्रन्दितं वचः ।
सरो मा वर्धयस्वेति ततः सा सरमाऽभवत् ॥ २६ ॥
एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः ।
स्वां स्वां भार्यामुपागम्य गन्धर्वा इव नन्दने ॥ २७ ॥
ततो मन्दोदरी पुत्रं मेघनादमजीजनत् ।
स एष इन्द्रजिन्नाम युष्माभिरभिधीयते ॥ २८ ॥
जातमात्रेण हि पुरा तेन रावणसूनुना ।
रुदता सुमहान्मुक्तो नादो जलधरोपमः ॥ २९ ॥
जडीकृता च सा लङ्का तस्य नादेन राघव ।
पिता तस्याकरोन्नाम मेघनाद इति स्वयम् ॥ ३० ॥
सोऽवर्धत तदा राम रावणान्तःपुरे शुभे ।
रक्ष्यमाणो वरस्त्रीभिश्छन्नः काष्ठैरिवानलः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे द्वादशः सर्गः ॥

आदितः श्लोकाः 21214 उत्तरकाण्डे आदितः श्लोकाः 490

## त्रयोदशः सर्गः ॥ १३ ॥

### कुबेरदूतवधः ॥

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केनचित् ।
निद्रा समभवत्तीव्रा कुम्भकर्णस्य रूपिणी ॥ १ ॥

ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीद्वचः ।
निद्रा मां बाधते राजन्कारयस्व ममालयम् ॥ २ ॥

विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत् ।
अकुर्वन् कुम्भकर्णस्य कैलाससममालयम् ॥ ३ ॥

विस्तीर्णं योजनं शुभ्रं ततो द्विगुणमायतम् ।
दर्शनीयं निराबाधं कुम्भकर्णस्य चक्रिरे ॥ ४ ॥

स्फाटिकैः काञ्चनैश्चित्रैः स्तम्भैः सर्वत्र शोभितम् ।
वैडूर्यकृतसोपानं किङ्किणीजालकं तथा ॥ ५ ॥

दान्ततोरणविन्यस्तं वज्रस्फटिकवेदिकम् ।
मनोहरं सर्वसुखं कारयामास राक्षसः ॥
सर्वत्र सुखदं नित्यं मेरोः पुण्यां गुहामिव ॥ ६ ॥

तत्र निद्रासमाविष्टः कुम्भकर्णो महाबलः ।
बहून्यब्दसहस्राणि शयानो न प्रबुध्यते ॥ ७ ॥

निद्राभिभूते तु तदा कुम्भकर्णे दशाननः ।
देवर्षियक्षगन्धर्वान्सञ्जघ्ने हि निरङ्कुशः ॥ ८ ॥

उद्यानानि च चित्राणि नन्दनादीनि यानि च ।
तानि गत्वा सुसंक्रुद्धो भिनत्ति स्म दशाननः ॥ ९ ॥

नदीं गज इव क्रीडन्वृक्षान्वायुरिव क्षिपन् ।
नगान्वज्र इवोत्सृष्टो विध्वंसयति राक्षसः ॥ १० ॥

तथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः ।
कुलानुरूपं धर्मज्ञो वृत्तं संस्मृत्य चात्मनः ॥ ११ ॥

सौभ्रात्रदर्शनार्थं तु दूतं वैश्रवणस्तदा ।
लङ्कां संप्रेषयामास दशग्रीवस्य वै हितम् ॥ १२ ॥

स गत्वा नगरीं लङ्कामाससाद विभीषणम् ।
मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति ॥ १३ ॥

पृष्ट्वा च कुशलं राज्ञो ज्ञातीनां च विभीषणः ।
सभायां दर्शयामास तमासीनं दशाननम् ॥ १४ ॥

स दृष्ट्वा तत्र राजानं दीप्यमानं स्वतेजसा ।
जयेति वाचा संपूज्य तूष्णीं समभवत्तदा ॥ १५ ॥

तं तत्रोत्तमपर्यङ्के वरास्तरणशोभिते ।
उपविष्टं दशग्रीवं दूतो वाक्यमथाब्रवीत् ॥ १६ ॥

राजन्वदामि ते सर्वं भ्राता तव यदब्रवीत् ।
उभयोः सदृशं वीर वृत्तस्य च कुलस्य च ॥ १७ ॥

साधु पर्याप्तमेतावत्कृतश्चारित्रसंग्रहः ।
साधुधर्मे व्यवस्थानं क्रियतां यदि शक्यते ॥ १८ ॥

दृष्टं मे नन्दनं भग्नमृषयो निहताः श्रुताः ।
देवतानां समुद्योगस्त्वत्तो राजन्मम श्रुतः ॥ १९ ॥

निराकृतश्च बहुशस्त्वयाऽहं राक्षसाधिप ।
सापराधोऽपि बालो हि रक्षितव्यः स्वबान्धवैः ॥ २० ॥

अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् ।
रौद्रं व्रतं समास्थाय नियतो नियतेन्द्रियः ॥ २१ ॥

तत्र देवो मया दृष्टः सह देव्या मया प्रभुः ।
सव्यं चक्षुर्मया दैवात्तत्र देव्यां निपातितम् ॥ २२ ॥

का न्वियं स्यादिति शुभा न खल्वन्येन हेतुना ।
रूपं ह्यनुपमं कृत्वा रुद्राणी तत्र तिष्ठति ॥ २३ ॥

देव्या दिव्यप्रभावेन दग्धं सव्यं ममेक्षणम् ।
रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतम् ॥ २४ ॥

ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम् ।
तूष्णीं वर्षशतान्यष्टौ समाधारं महाव्रतम् ॥ २५ ॥

समाप्ते नियमे तस्मिंस्तत्र देवो महेश्वरः ।
प्रीतः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः ॥ २६ ॥

प्रीतोऽस्मि तव धर्मज्ञ तपसा तेन सुव्रत ॥ २७ ॥

मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप ।
तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् ॥
व्रतं सुनिश्चयं ह्येतन्मया ह्युत्पादितं पुरा ॥ २८ ॥

तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर ॥ २९ ॥

तपसा निर्जितश्चैव सखा मम भवानघ ॥ ३० ॥

देव्या दग्धं प्रभावेन यच्च सव्यं तवेक्षणम् ।
पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् ॥
एकाक्षिपिङ्गलेत्येवं नाम स्थास्यति शाश्वतम् ॥ ३१ ॥

एवं तेन सखित्वं च प्राप्यानुज्ञां च शङ्करात् ।
आगतेन मया चायं श्रुतस्ते पापनिश्चयः ॥ ३२ ॥

तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् ।
चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस्तव ॥ ३३ ॥

एवमुक्तो दशग्रीवः क्रुद्धः संरक्तलोचनः ।
हस्तौ दन्तांश्च संपीड्य वाक्यमेतदुवाच ह ॥ ३४ ॥

विज्ञातं ते मया दूत वाक्यं यस्य प्रभाषसे ।
नैतत्त्वमसि नैवासौ भ्रात्रा येनासि चोदितः ॥ ३५ ॥

हितं नैष ममैतद्धि ब्रवीति धनरक्षकः ।
महेश्वरसखित्वं तु मूढ श्रावयसे किल ॥ ३६ ॥

न चेदं क्षमणीयं मे यदेतद्भाषितं त्वया ॥ ३७ ॥

न हन्तव्यो गुरुर्ज्येष्ठो ममायमिति मन्यते ।
तस्य त्विदानीं श्रुत्वा मे वाक्यमेषा कृता मतिः ॥
त्रीन्लोकानपि जेष्यामि बाहुवीर्यमुपाश्रितः ॥ ३८ ॥

एतन्मुहूर्तमेवाहं तस्यैकस्य तु वै कृते ।
चतुरो लोकपालांस्तान्नयिष्यामि यमक्षयम् ॥ ३९ ॥

एवमुक्त्वा तु लङ्केशो दूतं खड्गेन जघ्निवान् ।
ददौ भक्षयितुं ह्येनं राक्षसानां दुरात्मनाम् ॥ ४० ॥

एवं कृतस्वस्त्ययनो रथमारुह्य रावणः ।
त्रैलोक्यविजयाकाङ्क्षी ययौ यत्र धनेश्वरः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे त्रयोदशः सर्गः ॥

आदितः श्लोकाः 21255 उत्तरकाण्डे आदितः श्लोकाः 531

## चतुर्दशः सर्गः ॥ १४ ॥

### यक्षराक्षसयुद्धम् ॥

ततस्तु सचिवैः सार्धं षड्भिर्नित्यं बलोद्धतैः ।
महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १ ॥

धूम्राक्षेण च वीरेण नित्यं समरगृध्नुना ।
संवृतः प्रययौ श्रीमान्क्रोधाल्लोकान्दहन्निव ॥ २ ॥

पुराणि स नदीः शैलान्वनान्युपवनानि च ।
अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३ ॥

सन्निविष्टं गिरौ तस्मिन्राक्षसेन्द्रं निशम्य तु ।
युद्धेऽत्यर्थकृतोत्साहं दुरात्मानं समन्त्रिणम् ॥ ४ ॥

यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः ।
राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥

ते गत्वा सर्वमाचख्युर्भ्रातुस्तस्य चिकीर्षितम् ।
अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६ ॥

ततो बलानां संक्षोभो व्यवर्धत महोदधेः ।
तस्य नैर्ऋतराजस्य शैलं सञ्चालयन्निव ॥ ७ ॥

ततो युद्धं समभवद्यक्षराक्षससंकुलम् ।
व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥ ८ ॥

स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः ।
हर्षनादान्बहून्कृत्वा स क्रोधादभ्यधावत ॥ ९ ॥

ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः ।
तेषां सहस्रमेकैकं यक्षाणां समयोधयन् ॥ १० ॥

ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः ।
हन्यमानो दशग्रीवस्तत्सैन्यं समगाहत ॥ ११ ॥

स निरुच्छ्वासवत्तत्र वध्यमानो दशाननः ।
वर्षद्भिरिव जीमूतैर्धाराभिरवरुध्यत ॥ १२ ॥

न चकार व्यथां चैव यक्षशस्त्रैः समाहतः ।
महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३ ॥

स दुरात्मा समुद्यम्य कालदण्डोपमां गदाम् ।
प्रविवेश ततः सैन्यं नयन्यक्षान्यमक्षयम् ॥ १४ ॥

स कक्षमिव विस्तीर्णं शुष्केन्धनमिवाकुलम् ।
वातेनाग्निरिवायत्तो यक्षसैन्यं ददाह तत् ॥ १५ ॥
तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः ।
अल्पावशेषास्ते यक्षाः कृता वातैरिवाम्बुदाः ॥ १६ ॥
केचित्समाहता भग्नाः पतिताः समरक्षितौ ।
ओष्ठांश्च दशनैस्तीक्ष्णैरदशन्कुपिता रणे ॥ १७ ॥
श्रान्ताश्चान्योन्यमालिङ्ग्य भ्रष्टशस्त्रा रणाजिरे ।
सीदन्ति च तदा यक्षाः कूला इव जलेन ह ॥ १८ ॥
हतानां गच्छतां स्वर्गं युद्ध्यतां पृथिवीतले ।
प्रेक्षतामृषिसङ्घानां न बभूवान्तरं दिवि ॥ १९ ॥
एतस्मिन्नन्तरे राम विस्तीर्णबलवाहनः ।
प्रेषितो न्यपतद्यक्षो नाम्ना संयोधकण्टकः ॥ २० ॥
तेन चक्रेण मारीचो विष्णुनेव रणे हतः ।
पातितो भूतले शैलात्क्षीणपुण्य इव ग्रहः ॥ २१ ॥
ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः ।
तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २२ ॥
ततः काञ्चनचित्राङ्गं वैडूर्यरजसोक्षितम् ।
मर्यादां प्रतिहाराणां तोरणान्तरमाविशत् ॥ २३ ॥
तं तु राजन्दशग्रीवं प्रविशन्तं निशाचरम् ।
सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत् ॥
यदा तु वारितो राम न व्यतिष्ठत्स राक्षसः ॥ २४ ॥

ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः ।
रुधिरं प्रस्रवन्भाति शैलो धातुस्रवैरिव ॥ २५ ॥

स शैलशिखराभेण तोरणेन समाहतः ।
जगाम न क्षतिं वीरो वरदानात्स्वयंभुवः ॥ २६ ॥

तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः ।
नादृश्यत तदा यक्षो भस्मीकृततनुस्तदा ॥ २७ ॥

ततः प्रदुद्रुवुः सर्वे दृष्ट्वा रक्षःपराक्रमम् ।
ततो नदीर्गुहाश्चैव विविशुर्भयपीडिताः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे चतुर्दशः सर्गः ॥

आदितः श्लोकाः 21283 उत्तरकाण्डे आदितः श्लोकाः 559

## पञ्चदशः सर्गः ॥ १५ ॥

### पुष्पकापहरणम् ॥

ततस्तांल्लक्ष्य वित्रस्तान्यक्षेन्द्रांश्च सहस्रशः ।
स्वयमेव धनाध्यक्षो निर्जगाम रणं प्रति ॥ १ ॥

तत्र माणिचरो नाम यक्षः परमदुर्जयः ।
वृतो यक्षसहस्रैस्तु चतुर्भिः समयोधयत् ॥ २ ॥

ते गदामुसलप्रासैः शक्तितोमरमुद्गरैः ।
अभिघ्नन्तस्तदा यक्षा राक्षसान्समुपाद्रवन् ॥ ३ ॥

यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे ।
महोदरेण चानिन्द्यं सहस्रमपरं हतम् ॥ ४ ॥

क्रुद्धेन च तदा राजन्मारीचेन युयुत्सुना ।
निमेषान्तरमात्रेण द्वे सहस्रे निपातिते ॥ ५ ॥

धूम्राक्षेण समागम्य माणिभद्रो महारणे ।
मुसलेनोरसि क्रोधात्ताडितो न च कम्पितः ॥ ६ ॥

ततो गदां समाविध्य माणिभद्रेण राक्षसः ।
धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह ॥ ७ ॥

धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितम् ।
अभ्यधावत संग्रामे माणिभद्रं दशाननः ॥ ८ ॥

तं क्रुद्धमभिधावन्तं माणिभद्रो दशाननम् ।
शक्तिभिस्ताडयामास तिसृभिर्यक्षपुङ्गवः ॥ ९ ॥

ताडितो माणिभद्रस्य मुकुटे प्राहरद्रणे ।
तस्य तेन प्रहारेण मुकुटं पार्श्वमागतम् ॥ १० ॥

ततः संयुध्यमानेन विष्टब्धो न व्यकम्पत ।
तदाप्रभृति यक्षोऽसौ पार्श्वमौलिरिति स्मृतः ॥ ११ ॥

तस्मिंस्तु विमुखे यक्षे माणिभद्रे महात्मनि ।
सन्नादः सुमहान्राजंस्तस्मिञ्च्छैलेऽभ्यवर्तत ॥ १२ ॥

ततो दूरात्प्रददृशे धनाध्यक्षो गदाधरः ।
शुक्रप्रोष्ठपदाभ्यां च पद्मशङ्खसमावृतः ॥ १३ ॥

स दृष्ट्वा भ्रातरं सङ्ख्ये शापाद्विभ्रष्टगौरवम् ।
उवाच वचनं धीमान्युक्तं पैतामहे कुले ॥ १४ ॥

यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते ।
पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥ १५ ॥

यो हि मोहाद्विषं पीत्वा नावगच्छति मानवः ।
स तस्य परिणामान्ते जानीते कर्मणः फलम् ॥ १६ ॥

देवता नाभिनन्दन्ति धर्मयुक्तेन केनचित् ।
येन त्वमीदृशं भावं नीतः सन्नावबुध्यसे ॥ १७ ॥

यो हि मातृपितृभ्रातॄनाचार्यं चावमन्यते ।
स पश्यति फलं तस्य प्रेतराजवशं गतः ॥ १८ ॥

अध्रुवे हि शरीरे यो न करोति तपोऽर्जनम् ।
स पश्चात्तप्यते मूढो मृतो दृष्ट्वाऽऽत्मनो गतिम् ॥ १९ ॥

कस्यचिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २० ॥

बुद्धिरूपं फलं पुत्राञ्छौर्यं धीरत्वमेव च ।
प्राप्नुवन्ति नराः सर्वे स्वकृतैः पूर्वकर्मभिः ॥ २१ ॥

एवं निरयगामी त्वं यस्य ते मतिरीदृशी ।
न त्वां समभिभाषिष्ये दुर्वृत्तस्यैष निर्णयः ॥ २२ ॥

एवमुक्तस्ततस्तेन तस्यामात्याः समाहिताः ।
संक्रुद्धान्राक्षसान्क्रूरान्निजघ्नुः संयुगे तदा ॥
मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २३ ॥

ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना ।
गदयाऽभिहतो मूर्ध्नि न च स्थानात्प्रकम्पितः ॥ २४ ॥
ततस्तौ राम निघ्नन्तौ तदाऽन्योन्यं महामृधे ।
न विह्वलौ न च श्रान्तौ बभूवतुरमर्षणौ ॥ २५ ॥
आग्नेयमस्त्रं तस्मै स मुमोच धनदस्तदा ।
राक्षसेन्द्रो वारुणेन तदस्त्रं प्रत्यवारयत् ॥ २६ ॥
ततो मायां प्रविष्टोऽसौ राक्षसीं राक्षसेश्वरः ।
जघान मूर्ध्नि धनदं व्याविध्य महतीं गदाम् ॥ २७ ॥
एवं स तेनाभिहतो विह्वलः शोणितोक्षितः ।
कृत्तमूल इवाशोको निपपात धनाधिपः ॥ २८ ॥
ततः पद्मादिभिस्तत्र निधिभिः स तदाऽऽवृतः ।
धनदोच्छ्वासितस्तैस्तु वनमानीय नन्दनम् ॥ २९ ॥
निर्जित्य राक्षसेन्द्रस्तं धनदं हृष्टमानसः ।
पुष्पकं तस्य जग्राह विमानं जयलक्षणम् ॥ ३० ॥
काञ्चनस्तम्भसंवीतं वैडूर्यमणितोरणम् ।
मुक्ताजालप्रतिच्छन्नं सर्वकामफलप्रदम् ॥ ३१ ॥
स तं राजा समारुह्य कामगं वीर्यनिर्जितम् ।
जित्वा वैश्रवणं देवं कैलासात्समवातरत् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे पञ्चदशः सर्गः

आदितः श्लोकाः 21315 उत्तरकाण्डे आदितः श्लोकाः 591

## षोडशः सर्गः ॥ १६ ॥

### रावणनामप्राप्तिः ॥

स जित्वा धनदं राम भ्रातरं राक्षसाधिपः ।
महासेनप्रसूतिं तद्ययौ शरवणं महत् ॥ १ ॥

अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् ।
गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ २ ॥

स पर्वतं समारुह्य कञ्चिद्रम्यवनान्तरम् ।
अपश्यत्पुष्पकं तत्र राम विष्टम्भितं तदा ॥ ३ ॥

विष्टब्धं पुष्पकं दृष्ट्वा ह्यगमं कामगं कृतम् ।
अचिन्तयद्राक्षसेन्द्रः सचिवैस्तैः समावृतः ॥ ४ ॥

किंनिमित्तं चेच्छया मे नेदं गच्छति पुष्पकम् ।
पर्वतस्योपरिष्ठस्य कर्मेदं कस्यचिद्भवेत् ॥ ५ ॥

ततोऽब्रवीत्तदा राम मारीचो बुद्धिकोविदः ।
नेदं निष्कारणं राजन्पुष्पकं यन्न गच्छति ॥ ६ ॥

अथ वा पुष्पकमिदं धनदान्नान्यवाहनम् ।
अतो निष्पन्दमभवद्धनाध्यक्षविनाकृतम् ॥ ७ ॥

ततः पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् ।
नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ॥
निवर्तस्व दशग्रीव शैले क्रीडति शङ्करः ॥ ८ ॥

सुपर्णनागयक्षाणां देवगन्धर्वरक्षसाम् ।
सर्वेषामेव भूतानामगम्यः पर्वतः कृतः ॥
तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि ॥ ९ ॥

रोषात्तु ताम्रनयनः पुष्पकादवरुह्य सः ।
कोऽयं शङ्कर इत्युक्त्वा शैलमूलमुपागतः ॥ १० ॥

सोऽपश्यन्नन्दिनं तत्र देवस्यादूरतः स्थितम् ।
दीप्तं शूलमवष्टभ्य द्वितीयमिव शङ्करम् ॥ ११ ॥

तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः ।
प्रहासं मुमुचे तत्र सतोय इव तोयदः ॥ १२ ॥

तं क्रुद्धो भगवान्नन्दी शङ्करस्यापरा तनुः ।
अब्रवीत्तत्र तद्रक्षो दशाननमुपस्थितम् ॥ १३ ॥

यस्माद्वानरमूर्तिं मां दृष्ट्वा राक्षस दुर्मते ।
मौर्ख्यात्त्वमवजानीषे परिहासं च मुञ्चसि ॥ १४ ॥

तस्मान्मद्रूपसंपन्ना मद्वीर्यसमतेजसः ।
उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥ १५ ॥

किं त्विदानीं मया शक्यं हन्तुं त्वां हे निशाचर ।
न हन्तव्यो हतस्त्वं हि पूर्वमेव स्वकर्मभिः॥ १६ ॥

अचिन्तयित्वा स तदा नन्दिवाक्यं निशाचरः ।
पर्वतं तु समासाद्य वाक्यमेतदुवाच ह ॥ १७ ॥

पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः ।
तमिमं शैलमुन्मूलं करोमि तव गोपते ॥ १८ ॥

केन प्रभावेन भवो नित्यं क्रीडति राजवत् ।
विज्ञातव्यं न जानीते भयस्थानमुपस्थितम् ॥ १९ ॥

एवमुक्त्वा ततो राम भुजान्विक्षिप्य पर्वते ।
तोलयामास तं शैलं समृगव्यालपादपम् ॥ २० ॥

चालनात्पर्वतस्यैव गणा देवस्य कम्पिताः ।
चचाल पार्वती चापि तदाऽऽश्लिष्टा महेश्वरम् ॥ २१ ॥

ततो राम महादेवो देवानां प्रवरो हरः ।
पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ॥ २२ ॥

पीडितास्तु ततस्तस्य शैलस्याधोगता भुजाः ।
विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ॥ २३ ॥

तेन रक्षोधिपेनात्र वेदनार्तभुजेन वै ।
मुक्तो विरावः सुमहान् त्रैलोक्यं येन पूरितम् ॥ २४ ॥

मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षये ।
तदाऽऽसनात्प्रचलिता देवा इन्द्रपुरोगमाः ॥ २५ ॥

समुद्राश्चापि संक्षुब्धाश्चलिताश्चापि पर्वताः ।
यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् ॥ २६ ॥

अथ ते मन्त्रिणस्तस्य विक्रोशन्तमथाब्रुवन् ।
तोषयस्व महादेवं नीलकण्ठमुमापतिम् ॥ २७ ॥

तमृते शरणं नान्यं पश्यामोऽत्र दशानन ।
स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज ॥
कृपालुः शङ्करस्तुष्टः प्रसादं ते विधास्यति ॥ २८ ॥

एवमुक्तस्तदाऽमात्यैस्तुष्टाव वृषभध्वजम् ।
सामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः ॥
कालो महान्नरश्रेष्ठ रुवतो रक्षसो गतः ॥ २९ ॥

ततः प्रीतो महादेवः शैलाग्रे विष्ठितः प्रभुः ।
मुक्त्वा चास्य भुजान्राम प्राह वाक्यं दशाननम् ॥ ३० ॥

प्रीतोऽस्मि तव वीर्यस्य शौण्डीर्याच्च दशानन ।
शैलाक्रान्तेन यो मुक्तस्त्वया रावः सुदारुणः ॥ ३१ ॥

यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् ।
तस्मात्त्वं रावणो नाम नाम्ना तेन भविष्यसि ॥ ३२ ॥

देवता मानुषा यक्षा ये चान्ये जगतीतले ।
एवं त्वामभिधास्यन्ति रावणं लोकरावणम् ॥ ३३ ॥

गच्छ पौलस्त्य विस्रब्धं पथा येन त्वमिच्छसि ।
मया चैवाभ्यनुज्ञातो राक्षसाधिप गम्यताम् ॥ ३४ ॥

एवमुक्तस्तु लङ्केशः शंभुना स्वयमब्रवीत् ।
प्रीतो यदि महादेव वरं मे देहि याचतः ॥ ३५ ॥

अवध्यत्वं मया प्राप्तं देवगन्धर्वदानवैः ।
राक्षसैर्गुह्यकैर्नागैर्ये चान्ये बलवत्तराः ॥ ३६ ॥

मानुषान्न गणे देव स्वल्पास्ते मम संमताः ।
दीर्घमायुश्च मे प्राप्तं ब्रह्मणस्त्रिपुरान्तक ॥
वाञ्छितं चायुषः शेषं शस्त्रं त्वं च प्रयच्छ मे ॥ ३७ ॥

एवमुक्तस्ततस्तेन रावणेन स शङ्करः ।
ददौ खड्गं महादीप्तं चन्द्रहासमिति श्रुतम् ॥
आयुषश्चावशेषं च स्थित्वा भूतपतिस्तदा ॥ ३८ ॥
दत्त्वोवाच ततः शम्भुर्नावज्ञेयमिदं त्वया ।
अवज्ञातं यदि हि ते मामेवैष्यत्यसंशयः ॥ ३९ ॥
एवं महेश्वरेणैव कृतनामा स रावणः ।
अभिवाद्य महादेवमारुरोहाथ पुष्पकम् ॥ ४० ॥
ततो महीतले राम परिचक्राम रावणः ।
क्षत्रियान्सुमहावीर्यान्बाधमान इतस्ततः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे षोडशः सर्गः ॥

आदितः श्लोकाः 21356 उत्तरकाण्डे आदितः श्लोकाः 632

## सप्तदशः सर्गः ॥ १७ ॥

### वेदवतीशापः ॥

अथ राजन्महाबाहुर्विचरन्स महीतले ।
हिमवत्सानुमासाद्य परिचक्राम रावणः ॥ १ ॥
तत्रापश्यत्स वै कन्यां कृष्णाजिनजटाधराम् ।
आर्षेण विधिना युक्तां तपन्तीं देवतामिव ॥ २ ॥
स दृष्ट्वा रूपसंपन्नां कन्यां तां सुमहाव्रताम् ।
काममोहपरीतात्मा पप्रच्छ प्रहसन्निव ॥ ३ ॥

किमिदं वर्तसे भद्रे विरुद्धं यौवनस्य ते ।
न हि युक्ता तवैतस्य रूपस्य तपसः क्रिया ॥ ४ ॥

रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् ।
न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ॥ ५ ॥

कस्यासि दुहिता भद्रे को वा भर्ता वरानने ।
केन संभुज्यसे भीरु स नरः पुण्यभाग्भुवि ॥
पृच्छतः शंस मे सर्वं कस्य हेतोः श्रमस्तव ॥ ६ ॥

एवमुक्ता तु सा कन्या रावणेन यशस्विनी ।
अब्रवीद्विधिवत्कृत्वा तस्यातिथ्यं तपोधना ॥ ७ ॥

कुशध्वजो मम पिता ब्रह्मर्षिरमितप्रभः ।
बृहस्पतिसुतः श्रीमान्बुद्ध्या तुल्यो बृहस्पतेः ॥ ८ ॥

तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः ।
संभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ ९ ॥

ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ।
तेऽपि गत्वा हि पितरं वरणं रोचयन्ति मे ॥ १० ॥

न च मां स पिता तेभ्यो दत्तवान्राक्षसर्षभ ।
कारणं तद्वदिष्यामि निशाचर निशामय ॥ ११ ॥

पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः ।
अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता ॥ १२ ॥

दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः ।
शम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ॥ १३ ॥

तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥ १४ ॥

ततो मे जननी दीना तच्छरीरं पितुर्मम ।
परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १५ ॥

ततो मनोरथं सत्यं पितुर्नारायणं प्रति ।
करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १६ ॥

इति प्रतिज्ञामारुह्य चरामि विपुलं तपः ।
एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ॥ १७ ॥

नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् ।
आश्रये नियमं घोरं नारायणपरीप्सया ॥ १८ ॥

विज्ञातस्त्वं हि मे राजन्गच्छ पौलस्त्यनन्दन ।
जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ॥ १९ ॥

सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् ।
अवरुह्य विमानाग्रात्कन्दर्पशरपीडितः ॥ २० ॥

अवलिप्ताऽसि सुश्रोणि यस्यास्ते मतिरीदृशी ।
वृद्धानां मृगशावाक्षि भ्राजते धर्मसंग्रहः ॥ २१ ॥

त्वं सर्वगुणसम्पन्ना नार्हसे वक्तुमीदृशम् ।
त्रैलोक्यसुन्दरी भीरु यौवनं तेऽतिवर्तते ॥ २२ ॥

अहं लङ्कापतिर्भद्रे दशग्रीव इति श्रुतः ।
तस्य मे भव भार्या त्वं भुङ्क्ष्व भोगान्यथेप्सितान् ॥

कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे ।
वीर्येण तपसा चैव भोगेन च बलेन च ॥
न मया स समो भद्रे यं त्वं कामयसेऽङ्गने ॥ २४ ॥

इत्युक्तवति तस्मिंस्तु राक्षसे वेदवत्यथ ।
मा मैवमिति सा कन्या तमुवाच निशाचरम् ॥ २५ ॥

त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम् ।
त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥ २६ ॥

एवमुक्तस्तया तत्र वेदवत्या निशाचरः ।
मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् ॥ २७ ॥

ततो वेदवती क्रुद्धा केशान्हस्तेन साऽच्छिनत् ।
असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाऽकरोत् ॥

सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम् ।
उवाचाग्निं समाधाय मरणाय कृतत्वरा ॥ २९ ॥

धर्षितायास्त्वयाऽनार्य न मे जीवितमिष्यते ।
रक्षस्तस्मात्प्रवेक्ष्यामि पश्यतस्ते हुताशनम् ॥ ३० ॥

यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने ।
तस्मात्तव वधार्थं हि समुत्पत्स्ये ह्यहं पुनः ॥ ३१ ॥

न हि शक्यं स्त्रिया हन्तुं पुरुषः पापनिश्चयः ।
शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् ॥ ३२ ॥

यदि त्वस्ति मया किञ्चित्कृतं दत्तं हुतं तथा ।
तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता ॥ ३३ ॥

एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् ।
पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः ॥ ३४ ॥

सैषा जनकराजस्य प्रसूता तनया प्रभो ।
तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः ॥ ३५ ॥

पूर्वं क्रोधाहितः शत्रुर्यया ऽसौ निहतस्तथा ।
उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् ॥ ३६ ॥

एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः ।
क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा ॥ ३७ ॥

एषा वेदवती नाम पूर्वमासीत्कृते युगे ।
त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः ॥ ३८ ॥

उत्पन्ना मैथिलकुले जनकस्य महात्मनः
सीतोत्पन्ना तु सीतेति मानुषैः पुनरुच्यते ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे सप्तदशः सर्गः ॥

आदितः श्लोकाः 21395 उत्तरकाण्डे आदितः श्लोकाः 671

## अष्टादशः सर्गः ॥ १८ ॥

### मरुत्तविजयः ॥

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः ।
पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १ ॥

ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः ।
उशीरबीजमासाद्य ददर्श स तु रावणः ॥ २ ॥

संवर्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता बृहस्पतेः ।
याजयामास धर्मज्ञः सर्वैर्देवगणैर्वृतः ॥ ३ ॥

दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम् ।
तिर्यग्योनिं समाविष्टास्तस्य दर्शनभीरवः ॥ ४ ॥

इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः ।
कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥ ५ ॥

अन्येष्वपि गतेष्वेवं देवेष्वरिनिषूदन ।
रावणः प्राविशद्यज्ञं सारमेय इवाशुचिः ॥ ६ ॥

तं च राजा समासाद्य रावणो राक्षसाधिपः ।
प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद ॥ ७ ॥

ततो मरुत्तो नृपतिः को भवानित्युवाच तम् ।
अपहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् ॥ ८ ॥

अकुतूहलभावेन प्रीतोऽस्मि तव पार्थिव ।
धनदस्यानुजं यो मां नावगच्छसि रावणम् ॥ ९ ॥

त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम् ।
भ्रातरं येन निर्जित्य विमानमिदमाहृतम् ॥ १० ॥

ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत् ॥ ११ ॥

धन्यः खलु भवान्येन ज्येष्ठो भ्राता रणे जितः ।
न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते ॥ १२ ॥

कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान्वरम् ।
श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम् ॥ १३ ॥

तिष्ठेदानीं न मे जीवन्प्रतियास्यसि दुर्मते ।
अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ १४ ॥

ततः शरासनं गृह्य सायकांश्च नराधिपः ।
रणाय निर्ययौ क्रुद्धः संवर्तो मार्गमावृणोत् ॥ १५ ॥

सोऽब्रवीत्स्नेहसंयुक्तं मरुत्तं तं महानृषिः ।
श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः ॥ १६ ॥

माहेश्वरमिदं सत्रमलमाप्तं कुलं दहेत् ॥ १७ ॥

दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः ।
संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः ॥ १८ ॥

स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः ।
विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत् ॥ १९ ॥

ततस्तं निर्जितं मत्वा घोषयामास वै शुकः ।
रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान् ॥ २० ॥

तान्भक्षयित्वा तत्रस्थान्महर्षीन्यज्ञमागतान् ।
वितृप्तो रुधिरैस्तेषां पुनः सम्प्रययौ महीम् ॥ २१ ॥

रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः ।
ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन् ॥ २२ ॥

हर्षात्तदाऽब्रवीदिन्द्रो मयूरं नीलबर्हिणम् ।
प्रीतोऽस्मि तव धर्मज्ञ उपकाराद्विहङ्गम ॥ २३ ॥

मम नेत्रसहस्रं तु यत्त्वद्बर्हे भविष्यति ।
वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणाम् ॥
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ॥ २४ ॥

नीलाः किल पुरा बर्हा मयूराणां नराधिप ।
सुराधिपाद्वरं प्राप्य गताः सर्वे विचित्रताम् ॥ २५ ॥

धर्मराजोऽब्रवीद्राम प्राग्वंशे वायसं स्थितम् ।
पक्षिंस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु ॥ २६ ॥

यथाऽन्यैर्विविधै रोगैः पीड्यन्ते प्राणिनो मया ।
ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः ॥ २७ ॥

मृत्युतस्ते भयं नास्ति वरान्मम विहङ्गम ।
यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि ॥ २८ ॥

एते मद्विषयस्था वै मानवाः क्षुद्भयार्दिताः ।
त्वयि भुक्ते तु तृप्तास्ते भविष्यन्ति सबान्धवाः ॥ २९ ॥

वरुणस्त्वब्रवीद्धंसं गङ्गातोयविहारिणम् ।
श्रूयतां प्रीतिसंयुक्तं वचः पत्ररथेश्वर ॥ ३० ॥

वर्णो मनोहरः सौम्य चन्द्रमण्डलसन्निभः ।
भविष्यति तवोदग्रः शुद्धफेनसमप्रभः ॥ ३१ ॥

मच्छरीरं समासाद्य कान्तो नित्यं भविष्यसि ।
प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् ॥ ३२ ॥

हंसानां हि पुरा राम नीलवर्णः सपाण्डुरः ।
पक्षा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः ॥ ३३ ॥

अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् ।
हैरण्यं सम्प्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥ ३४ ॥

सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयम् ।
एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति ॥ ३५ ॥

एवं दत्त्वा वरांस्तेभ्यस्तस्मिन्यज्ञोत्सवे सुराः ।
निवृत्ताः सह राज्ञा ते पुनः स्वभवनं गताः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे अष्टादशः सर्गः ॥

आदितः श्लोकाः 21431 उत्तरकाण्डे आदितः श्लोकाः 707

## एकोनविंशः सर्गः ॥ १९ ॥

### अनरण्यशापः ॥

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः ।
नगराणि नरेन्द्राणां युद्धकाङ्क्षी दशाननः ॥ १ ॥

समासाद्य तु राजेन्द्रान्महेन्द्रवरुणोपमान् ।
अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २ ॥

निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः ।
अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३ ॥

ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः ।
मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः ॥
निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः ॥ ४ ॥

दुष्यन्तः सुरथो गाधिर्गयो राजा पुरूरवाः ।
एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः ॥ ५ ॥

अथायोध्यां समासाद्य रावणो राक्षसाधिपः ।
सुगुप्तामनरण्येन शक्रेणेवामरावतीम् ॥ ६ ॥

स तं पुरुषशार्दूलं पुरन्दरसमं बले ।
प्राह राजानमासाद्य युद्धं देहीति रावणः ॥
निर्जितोऽस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥ ७ ॥

अयोध्याधिपतिस्तस्य श्रुत्वा चावमतं वचः ।
अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ८ ॥

दीयते द्वन्द्वयुद्धं ते राक्षसाधिपते मया ।
सन्तिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥ ९ ॥

अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम् ।
निष्क्रामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ १० ॥

नागानां दशसाहस्रं वाजिनां नियुतं तथा ।
रथानां बहुसाहस्रं पत्तीनां च नरोत्तम ॥
महीं सञ्छाद्य निष्क्रान्तं सपदातिरथं रणे ॥ ११ ॥

ततः प्रवृत्तं सुमहद्युद्धं युद्धविशारद ।
अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् ॥ १२ ॥

तद्रावणबलं प्राप्य बलं तस्य महीपतेः ।
प्राणश्यत तदा सर्वं हव्यं हुतमिवानले ॥ १३ ॥

युद्ध्वा च सुचिरं कालं कृत्वा विक्रममुत्तमम् ।
प्रज्वलन्तं समासाद्य क्षिप्रमेवावशेषितम् ॥ १४ ॥

प्राविशत्सङ्कुलं तत्र शलभा इव पावकम् ॥ १५ ॥

सोऽपश्यत्तन्नरेन्द्रस्तु नश्यमानं महाबलम् ।
महार्णवं समासाद्य आपगानां शतं यथा ॥ १६ ॥

ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन्स्वयम् ।
आससाद नरेन्द्रस्तं रावणं क्रोधमूर्च्छितः ॥ १७ ॥

ततो बाणशतान्यष्टौ पातयामास मूर्धनि ।
तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः ॥ १८ ॥

तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतिं क्वचित् ।
वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि ॥ १९ ॥

ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा ।
तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह ॥ २० ॥

स राजा पतितो भूमौ विह्वलाङ्गः प्रवेपितः ।
वज्रदग्ध इवारण्ये सालो निपतितो महान् ॥ २१ ॥

तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम् ।
किमिदानीं फलं प्राप्तं त्वया मां प्रतियुध्यता ॥ २२ ॥

त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप ।
शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम ॥ २३ ॥

तस्यैवं ब्रुवतो राजा मन्दासुर्वाक्यमब्रवीत् ।
किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः ॥ २४ ॥

न ह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना ।
कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् ॥ २५ ॥

किं त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये ।
न ह्यहं विमुखो रक्षो युध्यमानस्त्वया हतः ॥ २६ ॥

इक्ष्वाकुपरिभावित्वाद्वचो वक्ष्यामि राक्षस ।
यदि दत्तं यदि हुतं यदि मे सुकृतं तपः ॥
यदि गुप्ताः प्रजाः सम्यक्तदा सत्यं वचोऽस्तु मे ॥ २७ ॥

उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् ।
रामो दाशरथिर्नाम यस्ते प्राणान्हरिष्यति ॥ २८ ॥

ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः ।
तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्च्युता ॥ २९ ॥

ततः स राजा राजेन्द्र गतः स्थानं त्रिविष्टपम् ।
स्वर्गते च नृपे तस्मिन्राक्षसः सोऽपसर्पत ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे एकोनविंशः सर्गः ॥

आदितः श्लोकाः 21461 उत्तरकाण्डे आदितः श्लोकाः 737

## विंशः सर्गः ॥ २० ॥

### नारदरावणसंवादः ॥

ततो वित्रासयन्मर्त्यान्पृथिव्यां राक्षसाधिपः ।
आससाद घने तस्मिन्नारदं मुनिपुङ्गवम् ॥ १ ॥

तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः ।
अब्रवीत्कुशलं दृष्ट्वा हेतुमागमनस्य च ॥ २ ॥

नारदस्तु महातेजा देवर्षिरमितप्रभः ।
अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम् ॥ ३ ॥

राक्षसाधिपते सौम्य तिष्ठ विश्रवसः सुत ।
प्रीतोऽस्म्यभिजनोपेतविक्रमैरूर्जितैस्तव ॥ ४ ॥

विष्णुना दैत्यघातैश्च ताक्ष्यस्योरगधर्षणैः ।
त्वया समं विमर्दैश्च भृशं हि परितोषितः ॥ ५ ॥

किञ्चिद्वक्ष्यामि तावत्ते श्रोतव्यं श्रोष्यसे यदि ।
तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ६ ॥

किमयं वध्यते तात त्वयाऽवध्येन दैवतैः ।
हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७ ॥

नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् ।
हन्यात्कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ८ ॥

तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्र कः ।
मतिमान्मानुषे लोके युद्धेन प्रणयी भवेत् ॥ ९ ॥

क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः ।
विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ १० ॥

पश्य तावन्महाबाहो राक्षसेश्वर मानुषम् ।
लोकमेनं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ ११ ॥

क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः ।
रुद्यते चापरैरार्तैर्धाराश्रुनयनाननैः ॥ १२ ॥

मातापितृसुतस्नेहैर्भार्याबन्धुमनोरमैः ।
मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते ॥ १३ ॥

अलमेनं परिक्लिश्य लोकं मोहनिराकृतम् ।
जित एव त्वया सौम्य मर्त्यलोको न संशयः ॥ १४ ॥

एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा ।
अब्रवीन्नारदं तत्र संप्रहस्याभिवाद्य च ॥ १५ ॥

महर्षे देवगन्धर्वविहार समरप्रिय ।
अहं समुद्यतो गन्तुं विजयार्थं रसातलम् ॥ १६ ॥

ततो लोकत्रयं जित्वा स्थाप्य नागान्सुरान्वशे ।
समुद्रममृतार्थं च मथिष्यामि रसालयम् ॥ १७ ॥

अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः ।
क्व खल्विदानीं मार्गेण त्वया ह्यन्येन गम्यते ॥ १८ ॥

अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति ।
मार्गो गच्छति दुर्धर्षो यमस्यामित्रकर्शन ॥ १९ ॥

स तु शारदमेघाभं हासं मुक्त्वा दशाननः ।
उवाच कृतमित्येव वचनं चेदमब्रवीत् ॥ २० ॥

तस्मादेवमहं ब्रह्मन्वैवस्वतवधोद्यतः ।
गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृपः ॥ २१ ॥

मया हि भगवन्क्रोधात्प्रतिज्ञातं रणार्थिना ।
अवजेष्यामि चतुरो लोकपालानिति प्रभो ॥ २२ ॥

तदिह प्रस्थितोऽहं वै प्रेतराजपुरं प्रति ।
प्राणिसंक्लेशकर्तारं योजयिष्यामि मृत्युना ॥ २३ ॥

एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च ।
प्रययौ दक्षिणामाशां प्रहृष्टः सह मन्त्रिभिः ॥ २४ ॥

नारदस्तु महातेजा मुहूर्तं ध्यानमास्थितः ।
चिन्तयामास विप्रेन्द्रो विधूम इव पावकः ॥ २४ ॥

येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः ।
क्षीणे चायुषि धर्मेण स कालो हिंस्यते कथम् ॥ २६ ॥

स्वदत्तकृतसाक्षी यो द्वितीय इव पावकः ।
लब्धसंज्ञा विजेष्यन्ते लोका यस्य महात्मनः ॥ २७ ॥

यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः ।
तं कथं राक्षसेन्द्रोऽसौ स्वयमेव गमिष्यति ॥ २८ ॥

यो विधाता च धाता च सुकृतं दुष्कृतं तथा ।
त्रैलोक्यं विजितं येन तं कथं तु विजेष्यते ॥ २९ ॥

अपरं किं तु कृत्वाऽयं विधानं संविधास्यति ।
कौतूहलसमुत्पन्नो यास्यामि यमसादनम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे विंशः सर्गः ॥

आदितः श्लोकाः 21491 उत्तरकाण्डे आदितः श्लोकाः 767

इत्यार्षे श्रीमद्रामायणे षड्विंशेऽह्नि वर्तमानकथाप्रसङ्गः ॥

[ पुरा कुशलवाभ्यां श्रीरामसन्निधावश्वमेधयज्ञवाटे द्वात्रिंशति दिनेषु गीते श्रीमद्रामायणे सप्तविंशेऽह्नि उत्तरकाण्डे एकविंशसर्गमारभ्य चत्वारिंशसर्गपर्यन्तं (21492—22395 श्लोकाः) गीतम्। तस्मिन् दिने गीताः श्लोकाः 904 ]

## एकविंशः सर्गः ॥ २१ ॥

### यमरावणसेनायुद्धम् ॥

एवं सञ्चिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः ।
आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥

अपश्यत्स यमं तत्र देवमग्निपुरस्कृतम् ।
विधानमुपतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २ ॥

स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् ।
अब्रवीत्सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥

कच्चित्क्षेमं तु देवर्षे कच्चिद्धर्मो न नश्यति ।
किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४ ॥

अब्रवीत्तु तदा वाक्यं नारदो भगवानृषिः ।
श्रूयतामभिधास्यामि विधानं च विधीयताम् ॥ ५ ॥

एष नाम्ना दशग्रीवः पितृराज निशाचरः ।
उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६ ॥

एतेन कारणेनाहं त्वरितो ह्यागतः प्रभो ।
दण्डप्रहरणस्याद्य तव किं नु भविष्यति ॥ ७ ॥

एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् ।
ददर्श दीप्तमायान्तं विमानं तस्य रक्षसः ॥ ८ ॥

तं देशं प्रभया तस्य पुष्पकस्य महाबलः ।
कृत्वा वितिमिरं सर्वं समीपं सोऽभ्यवर्तत ॥ ९ ॥

सोऽपश्यत्सुमहाबाहुर्दशग्रीवस्ततस्ततः ।
प्राणिनः सुकृतं कर्म भुञ्जानांश्चैव दुष्कृतम् ॥ १० ॥

अपश्यत्सैनिकांश्चास्य यमस्यानुचरैः सह ।
यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ॥ ११ ॥

ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः ।
क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः ॥ १२ ॥

श्रोत्रायासकरा वाचो वदतश्च भयावहाः ।
तार्यमाणान्वैतरणीं बहुशः शोणितोदकाम् ॥ १३ ॥

वालुकासु च तप्तासु तप्यमानान्मुहुर्मुहुः ।
असिपत्रवने चैव भिद्यमानानधार्मिकान् ॥ १४ ॥

रौरवे क्षारनद्यां च क्षुरधारासु चैव हि ।
पानीयं याचमानांश्च तृषितान्क्षुधितानपि ॥ १५ ॥

शवभूतान्कृशान्दीनान्विवर्णान्मुक्तमूर्धजान् ।
मलपङ्कधरान्मर्त्यान्रूक्षांश्च परिधावतः ॥
ददर्श रावणो मार्गे शतशोऽथ सहस्रशः ॥ १६ ॥

कांश्चिच्च गृहमुख्येषु गीतवादित्रनिस्वनैः ।
प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १७ ॥

गोरसं गोप्रदातारो ह्यन्नं चैवान्नदायिनः ।
गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥
सुवर्णमणिमुक्ताभिः प्रमदाभिरलङ्कृतान् ॥ १८ ॥

धार्मिकानपरांस्तत्र दीप्यमानान्स्वतेजसा ।
ददर्श सुमहाबाहू रावणो राक्षसाधिपः ॥ १९ ॥

ततस्तान्भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः ।
रावणो मोचयामास विक्रमेण बलाद्बली ॥ २० ॥

प्राणिनो मोचितास्तेन दशग्रीवेण रक्षसा ।
सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् ॥ २१ ॥

प्रेतेषु मुच्यमानेषु राक्षसेन महीयसा ।
प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् ॥ २२ ॥

ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः ।
पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ २३ ॥

तस्यासनानि प्रासादान्वेदिकास्तोरणानि च ।
पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ २४ ॥

देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे ।
भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ २५ ॥

असंख्या सुमहत्यासीत्तस्य सेना महात्मनः ।
शूराणामुग्रयातॄणां सहस्राणि शतानि च ॥ २६ ॥

ततस्ते सचिवास्तस्य यथाकामं यथाबलम् ।
अयुध्यन्त महावीराः स च राजा दशाननः ॥ २७ ॥

ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः ।
अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ २८ ॥

अन्योन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम् ।
यमस्य च महाबाहो रावणस्य च मन्त्रिणः ॥ २९ ॥

अमात्यांस्तांस्तु सन्त्यज्य यमयोधा महाबलाः ।
तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् ॥ ३० ॥

ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ।
फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः ॥ ३१ ॥

स तु शूलगदाप्रासाञ्छक्तितोमरसायकान् ।
मुसलानि शिला वृक्षान्मुमोचास्त्रबलाद्बली ॥ ३२ ॥

तरूणां च शिलानां च शस्त्राणां चातिदारुणम् ।
यमसैन्येषु तद्वर्षं पपातातिभयङ्करम् ॥ ३३ ॥

तांस्तु सर्वान्विनिर्भिद्य तदस्त्रमपहत्य च ।
जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३४ ॥

परिवार्य च तं सर्वे शैलं मेघोत्करा इव ।
भिन्दिपालैश्च शूलैश्च निरुच्छ्वासमपोथयन् ॥ ३५ ॥

विमुक्तकवचः क्रुद्धः सिक्तः शोणितविस्रवैः ।
ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत ॥ ३६ ॥

ततः स कार्मुकी बाणी समरे चाभिवर्तत ।
लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथाऽन्तकः ॥ ३७ ॥

ततः पाशुपतं दिव्यमस्त्रं सन्धाय कार्मुके ।
तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं विचकर्ष सः ॥ ३८ ॥

आकर्णात्स विकृष्याथ चापमिन्द्रारिराहवे ।
मुमोच तं शरं क्रुद्धस्त्रिपुरे शङ्करो यथा ॥ ३९ ॥

तस्य रूपं शरस्यासीद्विधूमज्वालमण्डलम् ।
वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्च्छितः ॥ ४० ॥

ज्वालामाली स तु शरः क्रव्यादानुगतो रणे ।
मुक्तो गुल्मान्द्रुमांश्चापि भस्म कृत्वा प्रधावति ॥ ४१ ॥

ते तस्य तेजसा दग्धा सैन्या वैवस्वतस्य तु ।
रणे तस्मिन्निपतिता दावदग्धा नगा इव ॥ ४२ ॥

ततस्तु सचिवैः सार्धं राक्षसो भीमविक्रमः ।
ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे एकविंशः सर्गः ॥

आदितः श्लोकाः 21534 उत्तरकाण्डे आदितः श्लोकाः 810

## द्वाविंशः सर्गः ॥ २२ ॥

### यमविजयः ॥

स तस्य तु महानादं श्रुत्वा वैवस्वतो यमः ।
शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १ ॥

स हि योधान्हतान्मत्वा क्रोधसंरक्तलोचनः ।
अब्रवीत्त्वरितं सूतं रथोऽयमुपनीयताम् ॥ २ ॥

तस्य सूतो रथं दिव्यमुपस्थाप्य महास्वनम् ।
स्थितः स च महातेजा आरुरोह महारथम् ॥
पाशमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः ॥ ३ ॥

येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् ।
कालदण्डस्तु पार्श्वस्थो मूर्तिमान्स्यन्दनोत्तमे ॥
यमप्रहरणं दिव्यं प्रदहन्निव तेजसा ॥ ४ ॥

तस्य पार्श्वेषु निच्छिद्राः कालपाशाः प्रतिष्ठिताः ।
पावकस्पर्शसङ्काशः स्थितो मूर्तश्च मुद्गरः ॥ ५ ॥

ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः ।
कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहम् ॥ ६ ॥

ततः प्रचोदयन्सूतस्तानश्वान्रुधिरप्रभान् ।
प्रययौ भीमसन्नादो यत्र रक्षःपतिः स्थितः ॥ ७ ॥

मुहूर्तेन यमं ते तु हया हरिहयोपमाः ।
प्रापयन्मनसस्तुल्या यत्र तत्प्रस्तुतं रणम् ॥ ८ ॥

दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् ।
सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवुः ॥ ९ ॥

लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः ।
नेह योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥ १० ॥

स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् ।
नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ ११ ॥

स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् ।
यमो मर्माणि संक्रुद्धो रावणस्योपकृन्तत ॥ १२ ॥

मर्मसु छिद्यमानेषु रावणो राक्षसेश्वरः ।
सहंस्तस्थौ रुजं घोरां भिद्यमान इवाचलः ॥ १३ ॥

रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह ।
तस्मिन्वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ १४ ॥

शरास्ते वज्रसङ्काशाश्छादयन्ति रणे यमम् ।
यथाऽचलं महाघोरा नानावर्णा वलाहकाः ॥ १५ ॥

तान्निहत्य शरांस्तूर्णं रावणस्य यमः स्वयम् ।
ततः प्रहरणं घोरं मुमोचारिनिषूदनः ॥ १६ ॥

ततो महाशक्तिशरैः पात्यमानो महोरसि ।
नाशक्नोत्प्रतिकर्तुं स राक्षसः शल्यपीडितः ॥ १७ ॥

एवं नानाप्रहरणैर्यमेनामित्रकर्शिना ।
सप्तरात्रं कृतः संख्ये विसंज्ञो विमुखो रिपुः ॥ १८ ॥

तदाऽऽसीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः ।
जयमाकाङ्क्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १९ ॥

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरम् ॥ २० ॥

संवर्त इव लोकानां क्रुध्यतोरभवत्तदा ।
राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ २१ ॥

राक्षसेन्द्रस्ततः क्रुद्धश्चापमायम्य संयुगे ।
निरन्तरमिवाकाशं कुर्वन्बाणांस्ततोऽसृजत् ॥ २२ ॥

मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरर्दयत् ।
यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २३ ॥

ततः क्रुद्धस्य सहसा यमस्याभिविनिःसृतः ।
ज्वालामाली स निश्वासाद्वदनात्क्रोधपावकः ॥ २४ ॥

ततोऽपश्यंस्तदाश्चर्यं दैत्यदानवराक्षसाः ।
क्रोधजं पावकं दीप्तं दिधक्षन्तं रिपोर्बलम् ॥ २५ ॥

मृत्युस्तु परमक्रुद्धो वैवस्वतमथाब्रवीत् ॥ २६ ॥

मुञ्च मां देव शीघ्रं च निहन्मि समरे रिपुम् ॥ २७ ॥

नरकः शम्बरो वृत्रः शम्भुः कार्तस्वरो बली ।
वैरोचनश्च नमुचिस्तावुभौ मधुकैटभौ ॥ २८ ॥

एते चान्ये च बहवो बलवन्तो दुरासदाः ।
विनिपन्ना मया दृष्टाः का चिन्ताऽस्मिन्निशाचरे ॥ २९ ॥

मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहम् ।
न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ ३० ॥

बलं मम न खल्वेतन्मर्यादैषा निसर्गतः ।
स दृष्टो न मया कालं मुहूर्तमपि जीवति ॥ ३१ ॥

तस्यैवं वचनं श्रुत्वा धर्मराजः प्रतापवान् ।
अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३२ ॥

ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः ।
कालदण्डममोघं तु तोलयामास पाणिना ॥ ३३ ॥

यस्य पार्श्वेषु निखिलाः कालपाशाः प्रतिष्ठिताः ।
पावकाशनिसङ्काशो मुद्गरो मूर्तिमान्स्थितः ॥ ३४ ॥

दर्शनादेव यः प्राणान्प्राणिनामपकर्षति ।
किं पुनस्ताडनात्स्पर्शात्पीडनाद्वाऽपि देहिनः ॥ ३५ ॥

स ज्वालापरिवारस्तु निर्दहन्निव राक्षसम् ।
तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३६ ॥

ततो विदुद्रुवुः सर्वे तस्मात्त्रस्ता रणाजिरे ।
सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ ३७ ॥

तस्मिन्प्रहर्तुकामे तु यमे दण्डेन रावणम् ।
यमं पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३८ ॥

वैवस्वत महाबाहो न खल्वमितविक्रम ।
न हन्तव्यस्त्वया तेन दण्डेनैव निशाचरः ॥ ३९ ॥

वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव ।
स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ४० ॥

यो हि मामनृतं कुर्याद्देवो वा मानुषोऽपि वा ।
त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४१ ॥

क्रुद्धेन विप्रमुक्तोऽयं निर्विशेषं प्रियाप्रिये ।
प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४२ ॥

अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः ।
कालदण्डो मया सृष्टः पूर्वं मृत्युपुरस्कृतः ॥ ४३ ॥

तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि ।
न ह्यस्मिन्पतिते कश्चिन्मुहूर्तमपि जीवति ॥ ४४ ॥

यदि ह्यस्मिन्निपतिते न म्रियेतैष राक्षसः ।
म्रियते वा दशग्रीवस्तदा ह्युभयतोऽनृतम् ॥ ४५ ॥

तन्निवर्तय लङ्केशं दण्डमेतं समुद्यतम् ।
सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥ ४६ ॥

एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा ।
एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥ ४७ ॥

किं न्विदानीं मया शक्यं कर्तुं रणगतेन हि ।
न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४८ ॥

एष तस्मात्प्रणश्यामि दर्शनादद्य रक्षसः ।
इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ४९ ॥

दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः ।
आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥ ५० ॥

स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः ।
जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे द्वाविंशः सर्गः ॥

आदितः श्लोकाः 21585 उत्तरकाण्डे आदितः श्लोकाः 861

## त्रयोविंशः सर्गः ॥ २३ ॥

### वरुणविजयः ॥

ततो जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम् ।
रावणस्तु रणश्लाघी स्वसहायान्ददर्श ह ॥ १ ॥

ततो रुधिरसिक्ताङ्गं प्रहारैर्जर्जरीकृतम् ।
रावणं राक्षसा दृष्ट्वा हृष्टवत्समुपागमन् ॥ २ ॥

जयेन वर्धयित्वा च मारीचप्रमुखास्ततः ।
पुष्पकं भेजिरे सर्वे सान्त्विता रावणेन तु ॥ ३ ॥

ततो रसातलं गच्छन्प्रविष्टः पयसां निधिम् ।
दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥ ४ ॥

स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् ।
कृत्वा नागान्वशे हृष्टो ययौ मणिमयीं पुरीम् ॥ ५ ॥

निवातकवचास्तत्र दैत्या लब्धवराऽवसन् ।
राक्षसांस्तान्समागम्य युद्धाय समुपाह्वयत् ॥ ६ ॥

ते तु सर्वे सुविक्रान्ता दैतेया बलशालिनः ।
नानाप्रहरणास्तत्र प्रययुर्युद्धदुर्मदाः ॥ ७ ॥

तेषां तु युद्ध्यमानानां साग्रः संवत्सरो गतः ।
न चान्यतरयोस्तत्र विजयो वा क्षयोऽपि वा ॥ ८ ॥

ततः पितामहस्तत्र त्रैलोक्यगतिरव्ययः ।
आजगाम द्रुतं देवो विमानवरमास्थितः ॥ ९ ॥

निवातकवचानां तु निवार्य रणकर्म तत् ।
वृद्धः पितामहो वाक्यमुवाच विदितार्थवत् ॥ १० ॥

न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः ।
न भवन्तः क्षयं नेतुमपि सामरदानवैः ॥ ११ ॥

राक्षसस्य सखित्वं च भवद्भिः सह रोचते ।
अविभक्ताश्च सर्वार्थाः सुहृदां नात्र संशयः ॥ १२ ॥

ततोऽग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः ।
निवातकवचैः सार्धं प्रीतिमानभवत्तदा ॥ १३ ॥

अर्थतस्तैर्यथान्यायं सवत्सरमथोषितः ।
स्वपुरान्निर्विशेषं च प्रियं प्राप्तो दशाननः ॥ १४ ॥

ततोपधार्य मायानां शतमेकं समाप्तवान् ।
सलिलेन्द्रपुरान्वेषी भ्रमति स्म रसातलम् ॥ १५ ॥

ततोऽश्मनगरं नाम कालकेयैरधिष्ठितम् ।
गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान् ॥ १६ ॥

शूर्पणख्याश्च भर्तारमसिना प्राच्छिनत्तदा ।
स्यालं च बलवन्तं च विद्युज्जिह्वं बलोत्कटम् ॥
जिह्वया संलिहन्तं च राक्षसं समरे तथा ॥ १७ ॥

तं विजित्य मुहूर्तेन जघ्ने दैत्यांश्चतुःशतम् ॥ १८ ॥

ततः पाण्डुरमेघाभं कैलासमिव भास्वरम् ।
वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ १९ ॥

क्षरन्तीं च पयस्तत्र सुरभिं गामवस्थिताम् ।
यस्याः पयोभिनिष्यन्दात्क्षीरोदो नाम सागरः ॥ २० ॥

ददर्श रावणस्तत्र गोवृषेन्द्रवरारणिम् ।
यस्माच्चन्द्रः प्रभवति शीतरश्मिः प्रजाहितः ॥ २१ ॥

यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः ।
अमृतं यत्र चोत्पन्नं स्वधा च स्वधभोजिनाम् ॥ २२ ॥

यां ब्रुवन्ति नरा लोके सुरभिं नाम नामतः ।
प्रदक्षिणं तु तां कृत्वा रावणः परमाद्भुताम् ॥
प्रविवेश महाघोरं गुप्तं बहुविधैर्बलैः ॥ २३ ॥

ततो धाराशताकीर्णं शारदाभ्रनिभं तदा ।
नित्यप्रहृष्टं ददृशे वरुणस्य गृहोत्तमम् ॥ २४ ॥

ततो हत्वा बलाध्यक्षान्समरे तैश्च ताडितः ।
अब्रवीच्च ततो योधान्राजा शीघ्रं निवेद्यताम् ॥ २५ ॥

युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयताम् ।
वद वा न भयं तेऽस्ति निर्जितोऽस्मीति साञ्जलिः ॥

एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः ।
पुत्राः पौत्राश्च निष्क्रामन्गौश्च पुष्कर एव च ॥ २७ ॥

ते तु वीर्यगुणोपेता बलैः परिवृताः स्वकैः ।
युङ्क्त्वा रथान्कामगमानुद्यद्भास्वरवर्चसः ॥ २८ ॥

ततो युद्धं समभवद्दारुणं रोमहर्षणम् ।
सलिलेन्द्रस्य पुत्राणां रावणस्य च धीमतः ॥ २९ ॥

अमात्यैश्च महावीर्यैर्दशग्रीवस्य रक्षसः ।
वारुणं तद्बलं कृत्स्नं क्षणेन विनिपातितम् ॥ ३० ॥

समीक्ष्य स्वबलं संख्ये वरुणस्य सुतास्तदा ।
अर्दिताः शरजालेन निवृत्ता रणकर्मणः ॥ ३१ ॥

महीतलगतास्ते तु रावणं दृश्य पुष्पके ।
आकाशमाशु विविशुः स्यन्दनैः शीघ्रगामिभिः॥ ३२ ॥

महदासीत्ततस्तेषां तुल्यस्थानमवाप्य तत् ।
आकाशयुद्धं तुमुलं देवदानवयोरिव ॥ ३३ ॥

ततस्ते रावणं युद्धे शरैः पावकसन्निभैः ।
विमुखीकृत्य सन्तुष्टा विनेदुर्विविधान्रवान् ॥ ३४ ॥

ततो महोदरः क्रुद्धो राजानं दृश्य धर्षितम् ।
त्यक्त्वा मृत्युभयं वीरो युद्धकाङ्क्षी व्यलोकयत् ॥ ३५ ॥

तेन ते दारुणा युद्धे कामगाः पवनोपमाः ।
महोदरेण गदया हता वै प्रययुः क्षितिम् ॥ ३६ ॥

तेषां वरुणपुत्राणां हत्वा योधान्हयाञ्छतान् ।
मुमोचाशु महानादं विरथान्प्रेक्ष्य तान्स्थितान् ॥ ३७ ॥

ते तु तेषां रथाः साश्वाः सह सारथिभिर्हतैः ।
महोदरेण निहताः पतिताः पृथिवीतले ॥ ३८ ॥

ते तु त्यक्त्वा रथान्पुत्रा वरुणस्य महात्मनः ।
आकाशे विष्ठिताः शूराः स्वप्रभावान्न विव्यथुः ॥ ३९ ॥

धनूंषि कृत्वा सज्जानि विनिर्भिद्य महोदरम् ।
रावणं समरे क्रुद्धाः सहिताः समभिद्रवन् ॥ ४० ॥

सायकैश्चापविभ्रष्टैर्वज्रकल्पैः सुदारुणैः ।
दारयन्ति स्म संक्रुद्धा मेघा इव महागिरिम् ॥ ४१ ॥

ततः क्रुद्धो दशग्रीवः कालाग्निरिव निर्गतः ।
शरवर्षैर्महाघोरैस्तेषां मर्मस्वताडयत् ॥ ४२ ॥

ततस्तेनैव सहसा सीदन्ति स्म पदातयः ।
मुसलानि विचित्राणि ततो भल्लशतानि च ॥ ४३ ॥

पट्टिशांश्चैव शक्तीश्च शतघ्नीस्तोमरांस्तथा ।
पातयामास दुर्धर्षस्तेषामुपरि विष्ठितः ॥ ४४ ॥

अपविद्धास्तु ते वीरा विनिष्पेतुः पदातयः ।
महापङ्कमिवासाद्य कुञ्जराः षष्टिहायनाः ॥ ४५ ॥
सीदमानान्सुतान्दृष्ट्वा विह्वलान्सुमहौजसः ।
ननाद रावणो हर्षान्महानम्बुधरो यथा ॥ ४६ ॥
ततो रक्षो महानादान्मुक्त्वा हन्ति स्म वारुणान् ।
नानाप्रहरणोपेतैर्धारापातैरिवाम्बुदः ॥ ४७ ॥
ततस्ते विमुखाः सर्वे पतिता धरणीतले ।
रणात्स्वपुरुषैः शीघ्रं गृहाण्येव प्रवेशिताः ॥ ४८ ॥
तानब्रवीत्ततो रक्षो वरुणाय निवेद्यताम् ॥ ४९ ॥
रावणं त्वब्रवीन्मन्त्री प्रहसो नाम वारुणः ।
गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः ॥
गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि ॥ ५० ॥
तत्किं तव वृथा वीर परिश्रम्य गते नृपे ।
ये तु सन्निहिता वीराः कुमारास्ते पराजिताः ॥ ५१ ॥
राक्षसेन्द्रस्तु तच्छ्रुत्वा नाम विश्राव्य चात्मनः ।
हर्षान्नादं विमुञ्चन्वै निष्क्रान्तो वरुणालयात् ॥ ५२ ॥
आगतस्तु पथा येन तेनैव विनिवृत्य सः ।
लङ्कामभिमुखो रक्षो नभःस्थलगतो ययौ ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे त्रयोविंशः सर्गः ॥

आदितः श्लोकाः 21638 उत्तरकाण्डे आदितः श्लोकाः 914

## चतुर्विंशः सर्गः ॥ २४ ॥

दण्डकायां खरादिनिवासनम् ॥

निवर्तमानः संहृष्टो रावणः सुदुरात्मवान् ।
जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः ॥ १ ॥

दर्शनीयां हि रक्षः स कन्यां स्त्रीं वाऽथ पश्यति ।
हत्वा बन्धुजनं तस्या विमाने तां रुरोध ह ॥ २ ॥

एवं पन्नगकन्याश्च राक्षसासुरमानुषीः ।
यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत् ॥ ३ ॥

ताभिः सर्वानवद्याभिर्नदीभिरिव सागरः ।
आपूरितं विमानं तद्भयशोकाशिवाश्रुभिः ॥ ४ ॥

नागगन्धर्वकन्याश्च महर्षितनयाश्च याः ।
दैत्यदानवकन्याश्च विमाने शतशोऽरुदन् ॥ ५ ॥

दीर्घकेश्यः सुचार्वङ्ग्यः पूर्णचन्द्रनिभाननाः ।
पीनस्तन्यस्तथा वज्रवेदिमध्यसमप्रभाः ॥ ६ ॥

रथकूबरसङ्काशैः श्रोणीदेशैर्मनोहराः ।
स्त्रियः सुराङ्गनाप्रख्या निष्टप्तकनकप्रभाः ॥
शोकदुःखभयत्रस्ता विह्वलाश्च सुमध्यमाः ॥ ७ ॥

तासां निश्वासवातेन सर्वतः संप्रदीपितम् ।
अग्निहोत्रमिवाभाति सन्निरुद्धाग्नि पुष्पकम् ॥ ८ ॥

काचिच्चिन्तयती तत्र किं नु मां भक्षयिष्यति ।
काचिद्दध्यौ सुदुःखार्ता अपि मां मारयेदयम् ॥ ९ ॥

इति मातृपितृन्स्मृत्वा भर्तृन्भ्रातृंस्तथैव च ।
दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः ॥ १० ॥

कथं नु खलु मे पुत्रो भविष्यति मया विना ।
कथं माता कथं भ्राता निमग्नाः शोकसागरे ॥ ११ ॥

हा कथं नु करिष्यामि भर्तारं दैवतं विना ।
मृत्यो प्रसादयामि त्वां नय मां दुःखभागिनीम्॥ १२ ॥

किं नु तद्दुष्कृतं कर्म पुरा देहान्तरे कृतम् ।
एवं स्म दुःखिताः सर्वाः पतिताः शोकसागरे ॥ १३ ॥

न खल्विदानीं पश्यामो दुःखस्यास्यान्तमात्मनः ।
अहो धिङ्मानुषं लोकं नास्ति खल्वधमः परः ॥ १४ ॥

यद्दुर्बला बलवता भर्तारो रावणेन नः ।
सूर्येणोदयता काले नक्षत्राणीव नाशिताः ॥ १५ ॥

अहो सुबलवद्रक्षो वधोपायेषु युज्यते ।
अहो दुर्वृत्तमास्थाय नात्मानं वै जुगुप्सते ॥ १६ ॥

सर्वथा सदृशस्तावद्विक्रमोऽस्य दुरात्मनः ।
इदं त्वसदृशं कर्म परदाराभिमर्शनम् ॥ १७ ॥

यस्मादेष परक्यासु रमते राक्षसाधमः ।
तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम् ॥ १८ ॥

शप्तः स्त्रीभिः स तु समं हतौजा इव निष्प्रभः ।
पतिव्रताभिः साध्वीबिर्बभूव विमना इव ॥ १९ ॥

एवं विलपितं तासां शृण्वन्राक्षसपुङ्गवः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ २० ॥

एतस्मिन्नन्तरे घोरा राक्षसी कामरूपिणी ।
सहसा पतिता भूमौ भगिनी रावणस्वसा ॥ २१ ॥

तां स्वसारं समुत्थाप्य रावणः परिसान्त्वयन् ।
अब्रवीत्किमिदं भद्रे वक्तुकामाऽसि मे द्रुतम् ॥ २२ ॥

सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत् ।
कृताऽस्मि विधवा राजंस्त्वया बलवता बलात् ॥ २३ ॥

एते राजंस्त्वया वीरा दैत्या विनिहता रणे ।
कालकेया इति ख्याता महाबलपराक्रमाः ॥ २४ ॥

प्राणेभ्योऽपि गरीयान्मे तत्र भर्ता महाबलः ।
सोऽपि त्वया हतस्तात रिपुणा भ्रातृगृध्नुना ॥ २५ ॥

त्वयाऽस्मि निहता राजन्स्वयमेव हि बन्धुना ।
राजन्वैधव्यशब्दं च भोक्ष्यामि त्वत्कृते ह्यहम् ॥ २६ ॥

ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि ।
स त्वया निहतो युद्धे स्वयमेव न लज्जसे ॥ २७ ॥

एवमुक्तो दशग्रीवो भगिन्या क्रोशमानया ।
अब्रवीत्सान्त्वयित्वा तां सामपूर्वमिदं वचः ॥ २८ ॥

अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः ।
दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः ॥ २९ ॥

युद्धप्रमत्तो व्याक्षिप्तो जयकाङ्क्षी क्षिपञ्छरान् ।
नावगच्छामि युद्धेषु स्वान्परान्वाऽप्यहं शुभे ॥ ३० ॥

तेनासौ निहतः सङ्ख्ये मया भर्ता तव स्वसः ।
अस्मिन्काले तु यत्प्राप्तं तत्करिष्यामि ते हितम् ॥
भ्रातुरैश्वर्ययुक्तस्य खरस्य वस पार्श्वतः ॥ ३१ ॥

चतुर्दशानां भ्राता ते सहस्राणां भविष्यति ।
प्रभुः प्रयाणे दाने च राक्षसानां महाबलः ॥ ३२ ॥

तत्र मातृष्वसेयस्ते भ्राताऽयं वै खरः प्रभुः ।
भविष्यति तवादेशं सदा कुर्वन्निशाचरः ॥ ३३ ॥

शीघ्रं गच्छत्वयं वीरो दण्डकान्परिरक्षितुम् ।
दूषणोऽस्य बलाध्यक्षो भविष्यति महाबलः ॥ ३४ ॥

स हि शप्तो वनोद्देशः क्रुद्धेनोशनसा पुरा ।
राक्षसानामधीवासो भविष्यति महात्मनाम् ॥ ३५ ॥

तत्र ते वचनं शूरः करिष्यति सदा खरः ।
रक्षसां कामरूपाणां प्रभुरेष भविष्यति ॥ ३६ ॥

एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह ।
चतुर्दश सहस्राणि रक्षसां वीर्यशालिनाम् ॥ ३७ ॥

स तैः परिवृतः सर्वै राक्षसैर्घोरदर्शनैः ।
अगच्छत्सन्खरः शीघ्रं दण्डकानकुतोभयः ॥ ३८ ॥

स तत्र कारयामास राज्यं निहतकण्टकम् ।
स च शूर्पणखा तत्र न्यवसद्दण्डकावने ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे चतुर्विंशः सर्गः ॥

आदितः श्लोकाः **21677** उत्तरकाण्डे आदितः श्लोकाः **953**

## पञ्चविंशः सर्गः ॥ २५ ॥

मधुसख्यं ॥

स तु दत्वा दशग्रीवो वनं घोरं खरस्य तत् ।
भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत् ॥ १ ॥

ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम् ।
तद्राक्षसेन्द्रो बलवान्प्रविवेश सहानुगः ॥ २ ॥

ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम् ।
ददर्श विष्ठितं यज्ञं श्रिया संप्रज्वलन्निव ॥ ३ ॥

ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम् ।
ददर्श स्वसुतं तत्र मेघनादं भयावहम् ॥ ४ ॥

तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः ।
अब्रवीत्किमिदं वत्स वर्तसे ब्रूहि तत्वतः ॥ ५ ॥

उशना त्वब्रवीत्तत्र यज्ञसंपत्समृद्धये ।
रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥

अहमाख्यामि ते राजञ्छ्रूयतां सर्वमेव तत् ।
यज्ञास्ते सप्त पुत्रेण प्राप्ताः सुबहुविस्तराः ॥ ७ ॥

अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः ।
राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ ८ ॥

माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे ।
वरांस्ते लब्धवान्पुत्रः साक्षात् पशुपतेरिह ॥ ९ ॥

कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् ।
मायां च तामसीं नाम यया सम्पद्यते तमः ॥ १० ॥

एतया किल संग्रामे मायया राक्षसेश्वर ।
प्रयुक्तया गतिः शक्या न हि ज्ञातुं सुरासुरैः ॥ ११ ॥

अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम् ।
अस्त्रं च बलवत्सौम्य शत्रुविध्वंसनं रणे ॥ १२ ॥

एतान्सर्वान्वरांल्लब्ध्वा पुत्रस्तेयं दशानन ।
अद्य यज्ञसमाप्तौ च त्वां दिदृक्षुः स्थितो ह्यहम् ॥ १३ ॥

ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम् ।
पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥ १४ ॥

एहीदानीं कृतं विद्धि सुकृतं तन्न संशयः ।
आगच्छ सौम्य गच्छामः स्वमेव भवनं प्रति ॥ १५ ॥

ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः ।
स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः ॥ १६ ॥

लक्षिण्यो रत्नभूताश्च देवदानवरक्षसाम् ।
नार्यो भूषणसंपन्ना ज्वलन्त्यः स्वेन तेजसा ॥ १७ ॥

विभीषणस्तु ता नारीर्दृष्ट्वा शोकपरायणाः ।
तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत् ॥ १८ ॥

ईदृशैस्त्वं समाचारैर्यशोऽर्थकुलनाशनैः ।
धर्षणं प्राणिनां दत्वा स्वमतेन विचेष्टसे ॥ १९ ॥

ज्ञातींस्तान्धर्षयित्वेमास्त्वयाऽऽनीता वराङ्गनाः ।
त्वामतिक्रम्य मधुना राजन्कुम्भीनसी हृता ॥ २० ॥

रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किं न्विदम् ।
कोऽयं यस्तु त्वयाऽऽख्यातो मधुरित्येव नामतः॥ २१ ॥

विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
श्रूयतामस्य पापस्य कर्मणः फलमागतम् ॥ २२ ॥

मातामहस्य योऽस्माकं ज्येष्ठो भ्राता सुमालिनः ।
माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः॥ २३ ॥

पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत् ।
तस्य कुम्भीनसी नाम दुहितुर्दुहिताऽभवत् ॥ २४ ॥

मातृष्वसुरथास्माकं सा च कन्याऽनलोद्भवा ।
भवत्यस्माकमेवैषा भ्रातणां धर्मतः स्वसा ॥ २५ ॥

सा हृता मधुना राजन् राक्षसेन बलीयसा ।
यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते ॥ २६ ॥

कुम्भकर्णे महाराज निद्रामनुभवत्यथ ।
निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान् ॥ २७ ॥

धर्षयित्वा हृता सा तु सुप्ताऽप्यन्तःपुरे तव ।
श्रुत्वापि तन्महाराज क्षान्तमेव हतो न सः ॥ २८ ॥

यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः ।
तदेतत्कर्मणो ह्यस्य फलं पापस्य दुर्मते ॥
अस्मिन्नेवाभिसम्प्राप्तं लोके विदितमस्तु ते ॥ २९ ॥

ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः ।
कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः ॥ ३० ॥

भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः ।
वाहनान्यधिरोहन्तु नानाप्रहरणोद्यताः ॥ ३१ ॥

अद्य तं समरे हत्वा मधुं रावणनिर्भयम् ।
सुरलोकं गमिष्यामि युद्धकाङ्क्षी सुहृद्वृतः ॥ ३२ ॥

ततो विजित्य त्रिदिवं वशे स्थाप्य पुरन्दरम् ।
निर्भयो विचरिष्यामि त्रैलोक्यैश्वर्यशोभितः ॥ ३३ ॥

अक्षौहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम् ।
नानाप्रहरणान्याशु निर्ययुर्युद्धकाङ्क्षिणाम् ॥ ३४ ॥

इन्द्रजित्त्वग्रतः सैन्यात्सैनिकान्परिगृह्य च ।
जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः ॥ ३५ ॥

विभीषणश्च धर्मात्मा लङ्कायां धर्ममाचरत् ।
शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति ॥ ३६ ॥

खरैरुष्ट्रैर्हयैर्दीप्तैः शिशुमारैर्महोरगैः ।
राक्षसाः प्रययुः सर्वे कृत्वाऽऽकाशं निरन्तरम् ॥ ३७ ॥

दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः ।
रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन् हि पृष्ठतः ॥ ३८ ॥

स तु गत्वा मधुपुरं प्रविश्य च दशाननः ।
न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान् ॥ ३९ ॥

सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता ।
तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा ॥ ४० ॥

तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ।
रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते ॥ ४१ ॥

साऽब्रवीद्यदि मे राजन् प्रसन्नस्त्वं महाभुज ।
भर्तारं न ममेहाद्य हन्तुमर्हसि मानद ॥ ४२ ॥

न हीदृशं भयं किञ्चित्कुलस्त्रीणामिहोच्यते ।
भयानामपि सर्वेषां वैधव्यं व्यसनं महत् ॥ ४३ ॥

सत्यवाग्भव राजेन्द्र मामवेक्षस्व याचतीम् ।
त्वयाऽप्युक्तं महाराज न भेतव्यमिति स्वयम् ॥ ४४ ॥

रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम् ।
क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् ॥ ४५ ॥

सह तेन गमिष्यामि सुरलोकं जयावहे ।
तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात् ॥ ४६ ॥

इत्युक्त्वा सा समुत्थाप्य प्रसुप्तं तं निशाचरम् ।
अब्रवीत्संप्रहृष्टेव राक्षसी तु पतिं वचः ॥ ४७ ॥

एष प्राप्तो दशग्रीवो मम भ्राता महाबलः ।
सुरलोकजयाकाङ्क्षी साहाय्ये त्वां वृणोति च ॥ ४८ ॥

तदस्य त्वं सहायार्थं सबन्धुर्गच्छ राक्षस ।
स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितुम् ॥ ४९ ॥

तस्यास्तद्वचनं श्रुत्वा तथेत्याह मधुर्वचः ॥ ५० ॥

ददर्श राक्षसश्रेष्ठं यथान्यायमुपेत्य सः ।
पूजयामास धर्मेण रावणं राक्षसाधिपम् ॥ ५१ ॥

प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् ।
तत्र चैकां निशामुष्य गमनायोपचक्रमे ॥ ५२ ॥

ततः कैलासमासाद्य शैलं वैश्रवणालयम् ।
राक्षसेन्द्रो महेन्द्राभः सेनामुपन्यवेशयत् ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे पञ्चविंशः सर्गः ॥

आदितः श्लोकाः 21730 उत्तरकाण्डे आदितः श्लोकाः 1006

## षड्विंशः सर्गः ॥ २६ ॥

### नलकूबरशापः ॥

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् ।
अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १ ॥

उदिते विमले चन्द्रे तुल्यपर्वतवर्चसि ।
प्रसुप्तं सुमहत्सैन्यं नानाप्रहरणायुधम् ॥ २ ॥

रावणस्तु महावीर्यो निषण्णः शैलमूर्धनि ।
स ददर्श गुणांस्तत्र चन्द्रपादसुशोभितान् ॥ ३ ॥

कर्णिकारवनैर्दीप्तैः कदम्बगहनैस्तथा ।
पद्मिनीभिश्च फुल्लाभिर्मन्दाकिन्या जलैरपि ॥ ४ ॥

चम्पकाशोकपुन्नागमन्दारतरुभिस्तथा ।
चूतपाटललोध्रैश्च प्रियङ्ग्वर्जुनकेतकैः ॥ ५ ॥

तगरैर्नारिकेलैश्च प्रियालपनसैस्तथा ।
आरग्वधैस्तमालैश्च प्रियालबकुलैरपि ॥ ६ ॥

एतैरन्यैश्च तरुभिरुद्भासितवनान्तरे ।
किन्नरा मदनेनार्ता रक्ता मधुरकण्ठिनः ॥
समं संप्रजगुर्यत्र मनस्तुष्टिविवर्धनम् ॥ ७ ॥

विद्याधरा मदक्षीबा मदरक्तान्तलोचनाः ।
योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै ॥ ८ ॥

घण्टानामिव सन्नादः शुश्रुवे मधुरस्वरः ।
अप्सरोगणसङ्घानां गायतां धनदालये ॥ ९ ॥

पुष्पवर्षाणि मुञ्चन्तो नगाः पवनताडिताः ।
शैलं तं वासयन्तीव मधुमाधवगन्धिनः ॥ १० ॥

मधुपुष्परजःपृक्तं गन्धमादाय पुष्कलम् ।
प्रववौ वर्धयन्कामं रावणस्य सुखोऽनिलः ॥ ११ ॥

गेयात्पुष्पसमृद्ध्या च शैत्याद्वायोर्गिरेर्गुणात् ।
प्रवृत्तायां रजन्यां च चन्द्रस्योदयनेन च ॥ १२ ॥

रावणः सुमहावीर्यः कामस्य वशमागतः ।
विनिश्वस्य विनिश्वस्य शशिनं समवैक्षत ॥ १३ ॥

एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता ।
सर्वाप्सरोवरा रम्भा दिव्यपुष्पविभूषिता ॥ १४ ॥

दिव्यचन्दनलिप्ताङ्गी मन्दारकृतमूर्धजा ।
दिव्योत्सवकृतारम्भा पूर्णचन्द्रनिभानना ॥ १५ ॥

चक्षुर्मनोहरं पीनं मेखलादामभूषितम् ।
समुद्वहन्ती जघनं रतिप्राभृतमुत्तमम् ॥ १६ ॥

कृतैर्विशेषकैरार्द्रैः षडर्तुकुसुमोद्भवैः ।
बभावन्यतमेव श्रीकान्तिद्युतिमतिह्रियाम् ॥
नीलं सतोयमेघाभं वस्त्रं समवकुण्ठिता ॥ १७ ॥

यस्या वक्त्रं शशिनिभं भ्रुवौ चापनिभे शुभे ।
ऊरू करिकराकारौ करौ पल्लवकोमलौ ॥
सैन्यमध्येन गच्छन्ती रावणेनोपवीक्षिता ॥ १८ ॥

तां समुत्थाय गच्छन्तीं कामबाणवशं गतः ।
करे गृहीत्वा लज्जन्तीं स्मयमानोऽभ्यभाषत ॥ १९ ॥

क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयम् ।
कस्याभ्युदयकालोऽयं यस्त्वां समुपभोक्ष्यते ॥ २० ॥

त्वदाननरसस्याद्य पद्मोत्पलसुगन्धिनः ।
सुधामृतरसस्येव कोऽद्य तृप्तिं गमिष्यति ॥ २१ ॥

स्वर्णकुम्भनिभौ पीनौ शुभौ भीरु निरन्तरौ ।
कस्योरःस्थलसंस्पर्शं दास्यतस्ते कुचाविमौ ॥ २२ ॥

सुवर्णचक्रप्रतिमं स्वर्णदामचितं पृथु ।
अध्यारोहति कस्तेऽद्य जघनं स्वर्गरूपिणम् ॥ २३ ॥

मद्विशिष्टः पुमान्कोऽद्य शक्रो विष्णुरथाश्विनौ ।
मामतीत्य हि यं च त्वं यासि भीरु न शोभनम् ॥ २४ ॥

विश्रम त्वं पृथुश्रोणि शिलातलमिदं शुभम् ॥ २५ ॥

त्रैलोक्ये यः प्रभुश्चैव मदन्यो नैव विद्यते ॥ २६ ॥

तदेवं प्राञ्जलिः प्रह्वो याचते त्वां दशाननः ।
भर्तुर्भर्ता विधाता च त्रैलोक्यस्य भजस्व माम् ॥ २७ ॥

एवमुक्ताऽब्रवीद्रम्भा वेपमाना कृताञ्जलिः ।
प्रसीद नार्हसे वक्तुमीदृशं त्वं हि मे गुरुः ॥ २८ ॥

अन्येभ्यो हि त्वया रक्ष्या प्राप्नुयां धर्षणं यदि ।
तद्धर्मतः स्नुषा तेऽहं तत्त्वमेव ब्रवीमि ते ॥ २९ ॥

अथाब्रवीद्दशग्रीवश्चरणाधोमुखीं स्थिताम् ।
रोमहर्षमनुप्राप्तां दृष्टमात्रेण तां तदा ॥ ३० ॥

सुतस्य यदि मे भार्या ततस्त्वं हि स्नुषा भवेः ।
बाढमित्येव सा रम्भा प्राह रावणमुत्तरम् ॥ ३१ ॥

धर्मतस्ते सुतस्याहं भार्या राक्षसपुङ्गव ।
पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते ॥
विख्यातस्त्रिषु लोकेषु नलकूबर इत्ययम् ॥ ३२ ॥

धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् ।
क्रोधाद्यश्च भवेदग्निः क्षान्त्या च वसुधासमः ॥ ३३ ॥

तस्यास्मि कृतसङ्केता लोकपालसुतस्य वै ।
तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम् ॥ ३४ ॥

तथा तस्य हि नान्यस्य भावो मां प्रति तिष्ठति ।
तेन सत्येन मां राजन्मोक्तुमर्हस्यरिन्दम ॥ ३५ ॥

स हि तिष्ठति धर्मात्मा मां प्रतीक्षन्समुत्सुकः ।
तत्र विघ्नं सुतस्येह कर्तुं नार्हसि मुञ्च माम् ॥ ३६ ॥

सद्भिराचरितं मार्गं गच्छ राक्षसपुङ्गव ।
माननीयो मम त्वं हि पालनीया तथाऽस्मि ते ॥ ३७ ॥

एवमुक्तो दशग्रीवः प्रत्युवाच विनीतवत् ।
स्नुषाऽस्मि यदवोचस्त्वमेकपत्नीष्वयं क्रमः ॥ ३८ ॥

देवलोकस्थितिरियं सुराणां शाश्वती मता ।
पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः ॥ ३९ ॥

एवमुक्त्वा स तां रक्षो निवेश्य च शिलातले ।
कामभोगाभिसंसक्तो मैथुनायोपचक्रमे ॥ ४० ॥

सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा ।
गजेन्द्राक्रीडमथिता नदीवाकुलतां गता ॥ ४१ ॥

लुलिताकुलकेशान्ता विधूतकरपल्लवा ।
पवनेनावधूतेव लता कुसुमशालिनी ॥ ४२ ॥

सा वेपमाना लज्जन्ती भीता करकृताञ्जलिः ।
नलकूबरमासाद्य पादयोर्निपपात ह ॥ ४३ ॥

तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः ।
अब्रवीत्किमिदं भद्रे पादयोः पतिताऽसि मे ॥ ४४ ॥

सा वै निश्वसमाना तु वेपमाना कृताञ्जलिः ।
तस्मै सर्वं यथातत्त्वमाख्यातुमुपचक्रमे ॥ ४५ ॥

एष देव दशग्रीवः प्राप्तो गन्तुं त्रिविष्टपम् ।
तेन सैन्यसहायेन निशेयं परिणामिता ॥ ४६ ॥

आयान्ती तेन दृष्टाऽस्मि त्वत्सकाशमरिन्दम ।
गृहीत्वा तेन पृष्टाऽस्मि कस्य त्वमिति रक्षसा ॥ ४७ ॥
मया तु सर्वं यत्सत्यं तस्मै सर्वं निवेदितम् ।
काममोहाभिभूतात्मा नाश्रौषीत्तद्वचो मम ॥ ४८ ॥
याच्यमानो मया देव स्नुषा तेऽहमिति प्रभो ।
तत्सर्वं पृष्ठतः कृत्वा बलात्तेनाऽस्मि धर्षिता ॥ ४९ ॥
एवं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत ।
न हि तुल्यबलं सौम्य स्त्रियाश्च पुरुषस्य च ॥ ५० ॥
एतच्छ्रुत्वा तु संक्रुद्धस्तदा वैश्रवणात्मजः ।
धर्षणां तां परां श्रुत्वा ध्यानं संप्रविवेश ह ॥ ५१ ॥
तस्य तत्कर्म विज्ञाय तदा वैश्रवणात्मजः ।
मुहूर्तात्क्रोधताम्राक्षस्तोयं जग्राह पाणिना ॥ ५२ ॥
गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि ।
उत्ससर्ज तदा शापं राक्षसेन्द्राय दारुणम् ॥ ५३ ॥
अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता ।
तस्मात्स युवतीमन्यां नाकामामुपयास्यति ॥ ५४ ॥
यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् ।
मूर्धा तु सप्तधा तस्य शकलीभविता तदा ॥ ५५ ॥
तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे ।
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥
पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः ॥ ५६ ॥

ज्ञात्वा लोकगतिं सर्वां तस्य मृत्युं च राक्षसः ।
ऋषयः पितरश्चैव प्रीतिमापुरनुत्तमाम् ॥ ५७ ॥

श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम् ।
नारीषु मैथुने भावं नाकामास्वभ्यरोचयत् ॥ ५८ ॥

तेन नीताः स्त्रियः प्रीतिमापुः सर्वाः पतिव्रताः ।
नलकूबरनिर्मुक्तं शापं श्रुत्वा मनःप्रियम् ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे षड्विंशः सर्गः ॥

आदितः श्लोकाः 21789 उत्तरकाण्डे आदितः श्लोकाः 1065

सप्तविंशः सर्गः ॥ २७ ॥

सुमालिवधः ॥

कैलासं लङ्घयित्वाऽथ दशग्रीवः स रावणः ।
आससाद महातेजा इन्द्रलोकं निशाचरः ॥ १ ॥

तस्य राक्षससैन्यस्य समन्तादुपयास्यतः ।
देवलोकं ययौ शब्दो भिद्यमानार्णवोपमः ॥ २ ॥

श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् ।
अब्रवीत्तत्र तान्देवान्सर्वानेव समागतान् ॥ ३ ॥

आदित्यान्सवसून्रुद्रान्विश्वान्साध्यान्मरुद्गणान् ।
सज्जीभवत युद्धार्थं रावणस्य दुरात्मनः ॥ ४ ॥

एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि ।
संनह्य सुमहासत्त्वा युद्धश्रद्धासमन्विताः ॥ ५ ॥

स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति ।
विष्णोः समीपमागम्य वाक्यमेतदुवाच ह ॥ ६ ॥

विष्णो कथं करिष्यामि महावीर्यपराक्रमः ।
असौ हि बलवान्रक्षो युद्धार्थमभिवर्तते ॥ ७ ॥

वरप्रदानाद्बलवान्न खल्वन्येन हेतुना ।
तत्तु सत्यवचः कार्यं यदुक्तं पद्मयोनिना ॥ ८ ॥

तद्यथा नमुचिर्वृत्रो बलिर्नरकशम्बरौ ।
त्वद्बलं समवष्टभ्य मया दग्धास्तथा कुरु ॥ ९ ॥

न ह्यन्यो देव देवानामापत्सु सुमहाबलः ।
गतिः परायणं नास्ति त्वामृते पुरुषोत्तम ॥ १० ॥

त्वं हि नारायणः श्रीमान्पद्मनाभः सनातनः ।
त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥ ११ ॥

तदाचक्ष्व यथातत्त्वं देवदेव मम स्वयम् ।
अपि चक्रसहायस्त्वं योत्स्यसे रावणं प्रभो ॥ १२ ॥

एवमुक्तः स शक्रेण देवो नारायणः प्रभुः ।
अब्रवीन्न परित्रासः कार्यस्ते श्रूयतां च मे ॥ १३ ॥

न तावदेष दुष्टात्मा शक्यो दैवतदानवैः ।
हन्तुं युधि समासाद्य वरदानेन दुर्जयः ॥ १४ ॥

सर्वथा तु महत्कर्म करिष्यति बलोत्कटः ।
राक्षसः पुत्रसहितो दृष्टमेतन्निसर्गतः ॥ १५ ॥

यत्तु मां त्वमभाषिष्ठा युध्यस्वेति सुरेश्वर ।
नाहं तं प्रतियोत्स्यामि रावणं राक्षसं युधि ॥ १६ ॥

नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते ।
दुर्लभश्चैव कामोऽद्य वरगुप्ताद्धि रावणात् ॥ १७ ॥

प्रतिजाने च देवेन्द्र त्वत्समीपे शतक्रतो ।
भविताऽस्मि यथाऽस्याहं रक्षसो मृत्युकारणम् ॥ १८ ॥

अहमेव निहन्ताऽस्मि रावणं सपुरःसरम् ।
देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतम् ॥ १९ ॥

एतस्मिन्नन्तरे नादः शुश्रुवे रजनीक्षये ।
तस्य रावणसैन्यस्य प्रयुद्धस्य समन्ततः ॥ २० ॥

ते प्रयुद्धा महावीर्या ह्यन्योन्यमभिवीक्ष्य वै ।
संग्राममेवाभिमुखा ह्यभ्यवर्तन्त हृष्टवत् ॥ २१ ॥

ततो दैवतसैन्यानां संक्षोभः समजायत ।
तदक्षयं महासैन्यं दृष्ट्वा समरमूर्धनि ॥ २२ ॥

ततो युद्धं समभवद्देवदानवरक्षसाम् ।
घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम् ॥ २३ ॥

एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः ।
युद्धार्थं समवर्तन्त सचिवा रावणाज्ञया ॥ २४ ॥

मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ ।
अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २५ ॥

संह्लादो धूमकेतुश्च महादंष्ट्रो महामुखः ।
जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः ॥ २६ ॥

सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः ।
त्रिशिराः करवीराक्षः सूर्यशत्रुश्च राक्षसः ॥ २७ ॥

महाकायोऽतिकायश्च देवान्तकनरान्तकौ ।
एतैः सर्वैः परिवृतो महावीर्यो महाबलः ॥ २८ ॥

रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह ।
स दैवतगणान्सर्वान्नानाप्रहरणैः शितैः ॥ २९ ॥

व्यध्वंसयत्सुसंक्रुद्धो वायुर्जलचरानिव ॥ ३० ॥

सुमालिभयसन्त्रस्ताः सुरास्ते सर्वतो दिशि ।
प्रदुद्रुवुर्वध्यमानाः सिंहत्रस्ता मृगा इव ॥ ३१ ॥

एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः ।
सावित्र इति विख्यातः प्रविवेश रणाजिरम् ॥ ३२ ॥

सैन्यैः परिवृतो हृष्टो नानाप्रहरणोद्यतैः ।
त्रासयञ्च्छत्रुसैन्यानि सिंहः क्षुद्रमृगानिव ॥ ३३ ॥

तथाऽऽदित्यौ महावीर्यौ त्वष्टा पूषा च दंशितौ ।
निर्भयौ सह सैन्येन तदा प्राविशतां रणे ॥ ३४ ॥

ततो युद्धं समभवत्सुराणां सह राक्षसैः ।
क्रुद्धानां रक्षसां कीर्तिं समरेष्वनिवर्तिनाम् ॥ ३५ ॥

ततस्ते राक्षसाः सर्वे विबुधान्समरे स्थितान् ।
नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः ॥ ३६ ॥

देवाश्च राक्षसान्घोरान्महाबलपराक्रमान् ।
समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयम् ॥ ३७ ॥

एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः ।
नानाप्रहरणैः क्रुद्धस्तत्सैन्यं सोऽभ्यवर्तत ॥ ३८ ॥

स दैवतबलं सर्वं नानाप्रहरणैः शितैः ।
व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा ॥ ३९ ॥

ते महाबाणवर्षैश्च शूलप्रासैः सुदारुणैः ।
हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः ॥ ४० ॥

ततो विद्राव्यमाणेषु दैवतेषु सुमालिना ।
वसूनामष्टमः क्रुद्धः सावित्रो वै व्यवस्थितः ॥ ४१ ॥

संवृतः स्वैरथानीकैः प्रहरन्तं निशाचरम् ।
विक्रमेण महातेजा वारयामास संयुगे ॥ ४२ ॥

ततस्तयोर्महायुद्धमभवद्रोमहर्षणम् ।
सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः ॥ ४३ ॥

ततस्तस्य महाबाणैर्वसुना सुमहात्मना ।
निहतः पन्नगरथः क्षणेन विनिपातितः ॥ ४४ ॥

हत्वा तु संयुगे तस्य रथं बाणशतैश्चितम् ।
गदां तस्य वधार्थाय वसुर्जग्राह पाणिना ॥ ४५ ॥

ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदाम् ।
तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः ॥ ४६ ॥

सा तस्योपरि चोल्काभा पतन्तीव बभौ गदा ।
इन्द्रप्रयुक्ता गर्जन्ती गिराविव महाशनिः ॥ ४७ ॥

तस्य नैवास्थि न शिरो न मांसं ददृशे तदा ।
गदया भस्मतां नीतं निहतस्य रणाजिरे ॥ ४८ ॥

तं दृष्ट्वा निहतं सङ्ख्ये राक्षसास्ते समन्ततः ।
व्यद्रवन्सहिताः सर्वे क्रोशमानाः परस्परम् ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे सप्तविंशः सर्गः ॥

आदितः श्लोकाः 21838 उत्तरकाण्डे आदितः श्लोकाः 1114

## अष्टाविंशः सर्गः ॥ २८ ॥

जयन्तापवाहनं इन्द्ररावणयुद्धं च ॥

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतम् ।
स्वसैन्यं विद्रुतं चापि लक्षयित्वाऽर्दितं सुरैः ॥ १ ॥

ततः स बलवान्क्रुद्धो रावणस्य सुतस्तदा ।
निवर्त्य राक्षसान्सर्वान्मेघनादो व्यवस्थितः ॥ २ ॥

सुरथेनाग्निवर्णेन कामगेन महारथः ।
अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३ ॥

ततः प्रविशतस्तस्य विविधायुधधारिणः ।
विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥ ४ ॥

न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे ।
सर्वानाविध्य वित्रस्तान्दृष्ट्वा शक्रोऽभ्यभाषत ॥ ५ ॥

न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः ।
एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥ ६ ॥

ततः शक्रसुतो देवो जयन्त इति विश्रुतः ।
रथेनाद्भुतकल्पेन संग्रामे सोऽभ्यवर्तत ॥ ७ ॥

ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् ।
रावणस्य सुतं युद्धे समासाद्य प्रजघ्निरे ॥ ८ ॥

तेषां युद्धं समभवत्सदृशं देवरक्षसाम् ।
महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९ ॥

ततो मातलिपुत्रे तु गोमुखे राक्षसात्मजः ।
सारथौ पातयामास शरान्कनकभूषणान् ॥ १० ॥

शचीसुतश्चापि तथा जयन्तस्तस्य सारथिम् ।
तं चापि रावणिः क्रुद्धः समन्तात्प्रत्यविध्यत ॥ ११ ॥

स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः ।
रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥

ततः प्रगृह्य शस्त्राणि सारवन्ति महान्ति च ।
सुरसैन्येषु संक्रुद्धः पातयामास रावणिः ॥ १३ ॥

शतघ्नीमुसलप्रासगदाखड्गपरश्वधान् ।
महान्ति गिरिशृङ्गाणि पातयामास रावणिः ॥ १४ ॥

ततः प्रव्यथिता लोकाः सञ्जज्ञे च तमो महत् ।
तस्य रावणपुत्रस्य शत्रुसैन्यानि निघ्नतः ॥ १५ ॥

ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् ।
बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥ १६ ॥

नाभ्यजानन्त चान्योन्यं रक्षो वा देवताऽथ वा ।
तत्र तत्र विपर्यस्तं समन्तात्परिधावति ॥ १७ ॥

एतस्मिन्नन्तरे वीरः पुलोमा नाम वीर्यवान् ।
दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १८ ॥

संगृह्य तं तु दौहित्रं प्रविष्टः सागरं तदा ।
मातामहार्यकस्तस्य पौलोमी येन सा शची ॥ १९ ॥

ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः ।
अप्रहृष्टास्ततः सर्वा व्यथिताः संप्रदुद्रुवुः ॥ २० ॥

रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः ।
अभ्यधावत देवांस्तान्मुमोच च महास्वनम् ॥ २१ ॥

दृष्ट्वा प्रणाशं पुत्रस्य रावणेश्चापि विक्रमम् ।
मातलिं चाह देवेशो रथः समुपनीयताम् ॥ २२ ॥

स तु दिव्यो महाभीमः सज्ज एव महारथः ।
उपस्थितो मातलिना वाह्यमानो महाजवः ॥ २३ ॥

ततो मेघा रथे तस्मिंस्तडिद्वन्तो महाबलाः ।
अग्रतो वायुचपला नेदुः परमनिस्वनाः ॥ २४ ॥

नानावाद्यान्यवाद्यन्त गन्धर्वाश्च समाहिताः ।
ननृतुश्चाप्सरःसङ्घा निर्याते त्रिदशेश्वरे ॥ २५ ॥

रुद्रैर्वसुभिरादित्यैः साध्यैश्च समरुद्गणैः ।
वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २६ ॥

निर्गच्छतस्तु शक्रस्य परुषं पवनो ववौ ।
भास्करो निष्प्रभश्चासीन्महोल्काश्च प्रपेदिरे ॥ २७ ॥

एतस्मिन्नन्तरे वीरो दशग्रीवः प्रतापवान् ।
आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २८ ॥

पन्नगैस्तु महाभोगैर्वेष्टितं रोमहर्षणैः ।
तेषां निश्वासवातेन प्रदीप्तमिव संयुगे ॥ २९ ॥

दैत्यैर्निशाचरैश्चैव स रथः परिवारितः ।
समराभिमुखो दैत्यो महेन्द्रं सोऽभ्यवर्तत ॥ ३० ॥

पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः ।
सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥ ३१ ॥

ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह ।
शस्त्राणि वर्षतां घोरं मेघानामिव संयुगे ॥ ३२ ॥

कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः ।
नाज्ञायत तदा युद्धे सह केनाप्ययुध्यत ॥ ३३ ॥

दन्तैर्भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैः ।
येन केनैव संरब्धस्ताडयामास वै सुरान् ॥ ३४ ॥

ततो रुद्रैर्महाघोरैः सङ्गम्याथ निशाचरः ।
प्रयुद्धस्तैश्च संग्रामे क्षतः शस्त्रैर्निरन्तरम् ॥ ३५ ॥

बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक् ।
विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः ॥ ३६ ॥

ततस्तद्राक्षसं सैन्यं त्रिदशैः समरुद्गणैः ।
रणे विद्रावितं सर्वं नानाप्रहरणैः शितैः ॥ ३७ ॥

केचिद्विनिहताः कृत्ताश्चेष्टन्ति स्म महीतले ।
वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥ ३८ ॥

रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगान्रणे ।
शिशुमारान्वराहांश्च पिशाचवदनांस्तथा ॥ ३९ ॥

तान्समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुच्छ्रिताः ।
देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ॥ ४० ॥

चित्रकर्म इवाभाति स तेषां रणसंप्लवः ।
निहतानां प्रमत्तानां राक्षसानां महीतले ॥ ४१ ॥

शोणितोदकनिष्पन्दकङ्कगृध्रसमाकुला ।
प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४२ ॥

एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् ।
निरीक्ष्य तद्बलं कृत्स्नं दैवतैर्विनिपातितम् ॥ ४३ ॥

स तं प्रतिविगाह्याशु प्रवृद्धं सैन्यसागरम् ।
त्रिदशान्समरे निघ्नञ्छक्रमेवाभ्यवर्तत ॥ ४४ ॥

आगाच्छक्रो महच्चापं विस्फार्य सुमहास्वनम् ।
यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥ ४५ ॥

तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि ।
निपातयामास शरान्पावकादित्यवर्चसः ॥ ४६ ॥

तथैव च महाबाहुर्दशग्रीवो व्यवस्थितः ।
शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४७ ॥

प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः
न ज्ञायते तदा किञ्चित्सर्वं हि तमसा वृतम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे अष्टाविंशः सर्गः ॥

आदितः श्लोकाः 21886 उत्तरकाण्डे आदितः श्लोकाः 1162

## एकोनत्रिंशः सर्गः ॥ २९ ॥

### इन्द्रग्रहणम् ॥

ततस्तमसि सञ्जाते सर्वे ते देवराक्षसाः ।
अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १ ॥

ततस्तु देवसैन्येन राक्षसानां बृहद्बलम् ।
दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥ २ ॥

तस्मिंस्तु तामसे युद्धे सर्वे ते देवराक्षसाः ।
अन्योन्यं नाभ्यजानन्त युध्यमानाः परस्परम् ॥ ३ ॥

इन्द्रश्च रावणश्चैव रावणिश्च महाबलः ।
तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ ४ ॥

स तु दृष्ट्वा बलं सर्वं निहतं रावणः क्षणात् ।
क्रोधमभ्यागमत्तीव्रं महानादं च मुक्तवान् ॥ ५ ॥

क्रोधात्सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह ।
परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥ ६ ॥

अद्यैतांस्त्रिदशान्सर्वान्विक्रमैः समरे स्वयम् ।
नानाशस्त्रैर्महाघोरैर्नयामि यमसादनम् ॥ ७ ॥

अहमिन्द्रं वधिष्यामि धनदं वरुणं यमम् ।
त्रिदशान्विनिहत्याथ स्वयं स्थास्याम्यथोपरि ॥
विषादो न च कर्तव्यः शीघ्रं वाहय मे रथम् ॥ ८ ॥

द्विः खलु त्वां ब्रवीम्यद्य यावदन्तो नयस्व माम् ॥ ९ ॥

अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् ।
नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ १० ॥

तस्य तद्वचनं श्रुत्वा तुरङ्गान्स मनोजवान् ।
आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ११ ॥

तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा ।
रथस्थः समरस्थांस्तान्देवान्वाक्यमथाब्रवीत् ॥ १२ ॥

सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते ।
जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ १३ ॥

एष ह्यतिबलः सैन्ये रथेन पवनौजसा ।
गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १४ ॥

न ह्येष हन्तुं शक्योऽद्य वरदानात्सुनिर्भयः ।
तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १५ ॥

यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया ।
एवमेतस्य पापस्य निरोधो मम रोचते ॥ १६ ॥

ततोऽन्यं देशमास्थाय शक्रः सन्त्यज्य रावणम् ।
अयुध्यत महाराज राक्षसांस्त्रासयन्रणे ॥ १७ ॥

उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः ।
दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १८ ॥

ततः स योजनशतं प्रविष्टो राक्षसाधिपः ।
देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १९ ॥

ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम् ।
न्यवर्तयदसंभ्रान्तः समावृत्य दशाननम् ॥ २० ॥

एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः ।
हा हताः स्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ २१ ॥

ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः ।
तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥ २२ ॥

तां प्रविश्य महामायां प्राप्तां गोपतिना पुरा ।
प्रविवेश सुसंरब्धस्तत्सैन्यं समभिद्रवत् ॥ २३ ॥

स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत ।
महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २४ ॥

स मातलिं समायान्तं ताडयित्वा शरोत्तमैः ।
महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २५ ॥

ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् ।
ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २६ ॥

स तत्र मायाबलवानदृश्योऽथान्तरिक्षगः ।
इन्द्रं मायापरिक्षिप्तं कृत्वा स प्राद्रवच्छरैः ॥ २७ ॥

स तं यदा परिश्रान्तमिदं जज्ञेऽथ रावणिः ।
तदैनं मायया बध्वा स्वसैन्यमभितोऽनयत् ॥ २८ ॥

तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात् ।
महेन्द्रममराः सर्वे किं नु स्यादित्यचिन्तयन् ॥ २९ ॥

दृश्यते न स मायावी शक्रजित्समितिंजयः ।
विद्यावानपि येनेन्द्रो मायया नीयते बलात् ॥ ३० ॥

एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा ।
रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३१ ॥

रावणस्तु समासाद्य आदित्यांश्च वसूंस्तथा ।
न शशाक स सङ्ग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३२ ॥

स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम् ।
रावणिः पितरं युद्धेऽदर्शनस्थोऽब्रवीदिदम् ॥ ३३ ॥

आगच्छ तात गच्छामो रणकर्म निवर्तताम् ।
जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥ ३४ ॥

अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः ।
स गृहीतो दैवबलाद्भग्नदर्पाः सुराः कृताः ॥ ३५ ॥

यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा ।
वृथा किं ते श्रमेणेह युद्धमत्र तु निष्फलम् ॥ ३६ ॥

ततस्ते दैवतगणा निवृत्ता रणकर्मणः ।
तच्छ्रुत्वा रावणेर्वाक्यं स्वस्थचेता बभूव ह ॥ ३७ ॥

अथ रणविगतज्वरः प्रभुर्विजयमवाप्य निशाचराधिपः ।
स्वभवनमभितो जगाम हृष्टः स्वसुतमवाप्य च वाक्यमब्रवीत् ॥

अतिबलसदृशैः पराक्रमैस्तैर्मम कुलमानविवर्धनं कृतम् ।
यदमरसमविक्रम त्वया वै त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥

नय रथमधिरोप्य वासवं नगरमितो व्रज सेनया वृतस्त्वम् ।
अहमपि तव गच्छतो द्रुतं सह सचिवैरनुयामि पृष्ठतः ॥

अथ स बलवृतः सवाहनस्त्रिदशपतिं परिगृह्य रावणिः ।
स्वभवनमभिगम्य राक्षसो मुदितमना विससर्ज राक्षसान् ।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे एकोनत्रिंशः सर्गः ॥

आदितः श्लोकाः 21927 उत्तरकाण्डे आदितः श्लोकाः 1203

## त्रिंशः सर्गः ॥ ३० ॥

मेघनादस्य इन्द्रजिन्नामप्राप्तिः ॥

जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै ।
प्रजापतिं सुराः सर्वे गताः परमदुःखिताः ॥ १ ॥

भगवन्पुरुहूतोऽयं निगृहीतोऽभवद्रणात् ।
राक्षसेन्द्रं सुरैः सर्वैरवध्यं कृतवानसि ॥ २ ॥

महेश्वरेण पुत्रस्य वरा दत्ता दुरात्मनः ।
किं करोतु सुरेन्द्रस्तं मायया बलवत्तरम् ॥ ३ ॥

सुराश्च सर्वे लोकेश न जयन्ति भवद्वरात् ।
तस्मात्त्वमेव देवेन्द्रं मोचयस्व महाद्युते
अद्यप्रभृति लोकेश स्वविक्रमबलोदितः ॥ ४ ॥

इति विज्ञाप्य भावज्ञाः प्रणिपत्य प्रसाद्य च ।
प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ ५ ॥

तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतम् ।
अब्रवीद्गगने तिष्ठन्सामपूर्वं प्रजापतिः ॥ ६ ॥

वत्स रावण तुष्टोऽस्मि पुत्रस्य तव संयुगे ।
अहोऽस्य विक्रमौदार्यं तव तुल्योऽधिकोऽपि वा ॥ ७ ॥

जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा ।
कृता प्रतिज्ञा सफला प्रीतोऽस्मि स्वसुतेन वै ॥ ८ ॥

अयं च पुत्रोऽतिबलस्तव रावण वीर्यवान् ।
जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ९ ॥

बलवान्दुर्जयश्चैव भविष्यत्येव राक्षसः ।
यं समाश्रित्य ते राजन्स्थापितास्त्रिदशा वशे ॥ १० ॥

तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः ।
किं चास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥ ११ ॥

अथाब्रवीन्महातेजा इन्द्रजित्समितिंजयः ।
अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ १२ ॥

ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः ।
नास्ति सर्वामरत्वं हि कस्यचित्प्राणिनो भुवि ॥
चतुष्पदः पक्षिणश्च भूतानां वा महौजसाम् ॥ १३ ॥

मरणान्तानि सर्वाणि स्थावराणि चराणि च ।
अपि शुष्कस्य वृक्षस्य पर्णस्य पतनं भवेत् ॥ १४ ॥

श्रुत्वा पितामहेनोक्तमिन्द्रजित्प्रभुणाऽव्ययम् ।
अथाब्रवीत्स तत्रस्थं मेघनादो महाबलः ॥
श्रूयतां वा भवेत्सिद्धिः शतक्रतुविमोक्षणे ॥ १५ ॥

ममेष्टं नित्यशो हव्यैर्मन्त्रैः संपूज्य पावकम् ।
सङ्ग्राममवतर्तुं च शत्रुनिर्जयकाङ्क्षिणः ॥ १६ ॥

अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभावसोः ।
तत्स्थस्यामरता स्यान्मे एष मे निश्चयो वरः ॥ १७ ॥

तस्मिन्यद्यसमाप्ते च जप्यहोमे विभावसौ ।
युध्येयं देव संग्रामे तदा मे स्याद्विनाशनम् ॥ १८ ॥

सर्वो हि तपसा देव वृणोत्यमरतां पुमान् ।
विक्रमेण मया त्वेतदमरत्वं प्रवर्तितम् ॥ १९ ॥

एवमस्त्विति तं चाह वाक्यं देवः पितामहः ।
मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥ २० ॥

एतस्मिन्नन्तरे राम दीनो भ्रष्टामरद्युतिः ।
इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ २१ ॥

तं तु दृष्ट्वा तथाभूतं प्राह देवः प्रजापतिः ।
शतक्रतो किमु पुरा करोति स्म सुदुष्कृतम् ॥ २२ ॥

अमरेन्द्र मया वह्वयः प्रजाः सृष्टास्तदा प्रभो ।
एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ २३ ॥

तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा ।
ततोऽहमेकाग्रमनास्ताः प्रजाः पर्यचिन्तयम् ॥ २४ ॥

सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे ।
यद्यत्प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥ २५ ॥

ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता ।
हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २६ ॥

यस्मान्न विद्यते हल्यं तेनाहल्येति विश्रुता ।
अहल्येति मया शक्र तस्या नाम प्रकीर्तितम् ॥ २७ ॥

निर्मितायां च देवेन्द्र तस्यां नार्यां सुरर्षभ ।
भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥ २८ ॥

त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो ।
स्थानाधिकतया पत्नी ममैषेति पुरन्दर ॥ २९ ॥

सा मया न्यासभूता तु गौतमस्य महात्मनः ।
न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥ ३० ॥

ततस्तस्य परिज्ञाय मया स्थैर्यं महामुनेः ।
ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥ ३१ ॥

स तया सह धर्मात्मा रमते स्म महामुनिः ।
आसन्निराशा देवास्तु गौतमे दत्तया तया ॥ ३२ ॥

संक्रुद्धस्त्वं हि धर्मात्मन्गत्वा तस्याश्रमं मुनेः ।
दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥ ३३ ॥

सा त्वया धर्षिता शक्र कामार्तेन समन्युना ।
दृष्टस्त्वं च तदा तेन ह्याश्रमे परमर्षिणा ॥ ३४ ॥

ततः क्रुद्धेन तेनासि शप्तः परमतेजसा ।
गतोऽसि येन देवेन्द्र दशाभागविपर्ययम् ॥ ३५ ॥

यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयम् ।
तस्मात्त्वं समरे राजञ्छत्रुहस्तं गमिष्यसि ॥ ३६ ॥

अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः ।
मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३७ ॥

तत्रार्धं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति ।
न च ते स्थावरं स्थानं भविष्यति पुरन्दर ॥ ३८ ॥

यश्च यश्च सुरेन्द्रः स्याद्ध्रुवः स न भविष्यति ।
एष शापो मया मुक्त इत्यसौ त्वां तदाऽब्रवीत् ॥ ३९ ॥

तां तु भार्यां स निर्भर्त्स्य सोऽब्रवीत्सुमहातपाः ।
दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ॥ ४० ॥

रूपयौवनसम्पन्ना यस्मात्त्वमनवस्थिता ।
तस्माद्रूपवती लोके न त्वमेका भविष्यसि ॥ ४१ ॥

रूपं च ते प्रजाः सर्वा गमिष्यन्ति न संशयः ।
यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥ ४२ ॥

तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विताः ।
सा तं प्रसादयामास महर्षिं गौतमं तदा ॥ ४३ ॥

अज्ञानाद्धर्षिता नाथ त्वद्रूपेण दिवौकसा ।
न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥ ४४ ॥

अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः ।
उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥ ४५ ॥

रामो नाम श्रुतो लोके वनं चाप्युपयास्यति ।
ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥ ४६ ॥

तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि ।
स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम् ॥ ४७ ॥

तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि ।
वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि ॥ ४८ ॥

एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् ।
ततश्चचार सुमहत्तपा पत्नी ब्रह्मवादिनः ॥ ४९ ॥

शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम् ।
तत्स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम् ॥
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव ॥ ५० ॥

शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ।
पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः ॥ ५१ ॥

पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ।
नीतः सन्निहितश्चैव आर्यकेण महोदधौ ॥ ५२ ॥

एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् ।
पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट् ॥ ५३ ॥

एतदिन्द्रजितो नाम बलं यत्कीर्तितं मया ।
निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः ॥ ५४ ॥

आश्चर्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा ।
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा ॥ ५५ ॥

विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ।
आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्दृष्टं पुरातनम् ॥ ५६ ॥

अगस्त्यं त्वब्रवीद्रामः सत्यमेतच्छ्रुतं च मे ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे त्रिंशः सर्गः ॥

आदितः श्लोकाः 21984 उत्तरकाण्डे आदितः श्लोकाः 1260

## एकत्रिंशः सर्गः ॥ ३१ ॥

### रावणनर्मदावगाहः ॥

ततो रामो महातेजा विस्मयात्पुनरेव हि ।
उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १ ॥

भगवन्राक्षसः क्रूरो यदाप्रभृति मेदिनीम् ।
पर्यटत्किं तदा लोकाः शून्या आसन्द्विजोत्तम ॥ २ ॥

राजा वा राजमात्रो वा किं तदा नात्र कश्चन ।
धर्षणं यत्र न प्राप्तो रावणो राक्षसेश्वरः ॥ ३ ॥

उताहो हीनवीर्यास्ते बभूवुः पृथिवीक्षितः ।
बहिष्कृता वराश्चैव बहवो निर्जिता नृपाः ॥ ४ ॥

राघवस्य वचः श्रुत्वा ह्यगस्त्यो भगवानृषिः ।
उवाच रामं प्रहसन्पितामह इवेश्वरम् ॥ ५ ॥

इत्येवं बाधमानस्तु पार्थिवान्पार्थिवर्षभ ।
चचार रावणो राम पृथिवीं पृथिवीपते ॥ ६ ॥

ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम् ।
संप्राप्तो यत्र सान्निध्यं परमं वसुरेतसः ॥ ७ ॥

तुल्य आसीन्नृपस्तत्र प्रभावाद्वसुरेतसः ।
अर्जुनो नाम यस्याग्निः शरकुण्डेशयः सदा ॥ ८ ॥

तमेव दिवसं सोथ हैहयाधिपतिर्बली ।
अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः ॥ ९ ॥

रावणो राक्षसेन्द्रस्तु तस्मिन्प्राप्य दिने पुरीम् ।
अपश्यन्हैहयेशं तु तस्यामात्यानपृच्छत ॥ १० ॥

क्वार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ ।
रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह ॥
ममागमनमव्यग्रैर्युष्माभिः सन्निवेद्यताम् ॥ ११ ॥

इत्येवं रावणेनोक्ता येऽमात्याः सुविपश्चितः ।
अब्रुवन्राक्षसपतिमसान्निध्यं महीपतेः ॥ १२ ॥

श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् ।
अपसृत्यागतो विन्ध्यं हिमवत्सन्निभं गिरिम् ॥ १३ ॥

स तमभ्रमिवाविष्टमुद्भ्रान्तमिव मेदिनीम् ।
अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम् ॥ १४ ॥

सहस्रशिखरोपेतं सिंहाध्युषितकन्दरम् ।
प्रपातपतितैः शीतैः साट्टहासमिवाम्बुभिः ॥ १५ ॥

देवदानवगन्धर्वैः साप्सरोगणकिन्नरैः ।
स्वःस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम् ॥ १६ ॥

नदीभिः स्यन्दमानाभिः स्फाटिकप्रतिमं जलम् ।
फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम् ॥ १७ ॥

उत्क्रामन्तं दरीवन्तं हिमवत्सन्निभं गिरिम् ।
पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ ॥
चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम् ॥ १८ ॥

महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः ।
उष्णाभितप्तैस्तृषितैः संक्षोभितजलाशयाम् ॥ १९ ॥

चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः ।
सारसैश्च सदा मत्तैः सुकूजद्भिः समावृताम् ॥ २० ॥

फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम् ।
विस्तीर्णपुलिनश्रोणीं हंसवालिसुमेखलाम् ॥ २१ ॥

पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकाम् ।
जलावगाहसंस्पर्शां फुल्लोत्पलशुभेक्षणाम् ॥ २२ ॥

पुष्पकादवरुह्याशु नर्मदां सरितां वराम् ।
इष्टामिव वरां नारीमवगाह्य दशाननः ॥ २३ ॥

स तस्याः पुलिने रम्ये नानाकुसुमशोभिते ।
उपोपविष्टः सचिवैः सार्धं राक्षसपुङ्गवः ॥ २४ ॥

प्रख्याय नर्मदां चाथ गङ्गेयमिति रावणः ।
नर्मदादर्शजं हर्षमाप्तवान्राक्षसाधिपः ॥ २५ ॥

ततः सलीलं प्रहसन्रावणो राक्षसाधिपः ।
उवाच सचिवांस्तत्र मारीचशुकसारणान् ॥ २६ ॥

एष रश्मिसहस्रेण जगत्कृत्वैव काञ्चनम् ।
तीक्ष्णतापकरः सूर्यो नभसो मध्यमास्थितः ॥
मामासीनं विदित्वेह चन्द्रायति दिवाकरः ॥ २७ ॥

नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः ।
मद्भयादनिलोऽप्यत्र वात्येष सुसमाहितः ॥ २८ ॥

इयं चापि सरिच्छ्रेष्ठा नर्मदा नर्मवर्धिनी ।
नक्रमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता ॥ २९ ॥

तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि ।
चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ॥ ३० ॥

ते यूयमवगाहध्वं नर्मदां शर्मदां नृणाम् ।
महापद्ममुखा मत्ता गङ्गामिव महागजाः ॥
अस्यां स्नात्वा महानद्यां पाप्मानं विप्रमोक्ष्यथ ॥ ३१ ॥

अहमप्यद्य पुलिने शरदिन्दुसमप्रभे ।
पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः ॥ ३२ ॥

रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः ।
समहोदरधूम्राक्षा नर्मदां विजगाहिरे ॥ ३३ ॥

राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी ।
वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः ॥ ३४ ॥

ततस्ते राक्षसाः स्नात्वा नर्मदायां वरांभसि ।
उत्तीर्य पुष्पाण्याजह्रुर्बल्यर्थं रावणस्य तु ॥ ३५ ॥

नर्मदापुलिने हृद्ये शुभ्राभ्रसदृशप्रभे ।
राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः ॥ ३६ ॥

पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः ।
अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः ॥ ३७ ॥

तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् ।
नर्मदासलिलात्तस्मादुत्ततार स रावणः ॥ ३८ ॥

तत्र क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतम् ।
रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः ॥
तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः ॥ ३९ ॥

यत्र यत्र च याति स्म रावणो राक्षसेश्वरः ।
जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥ ४० ॥

वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः ।
अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥ ४१ ॥

ततः सतामार्तिहरं परं वरं
वरप्रदं चन्द्रमयूखभूषणम् ।
समर्चयित्वा स निशाचरो जगौ
प्रसार्य हस्तान्प्रणनर्त चायतान् ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे एकत्रिंशः सर्गः ॥

आदितः श्लोकाः 22026 उत्तरकाण्डे आदितः श्लोकाः 1302

## द्वात्रिंशः सर्गः ॥ ३२ ॥

### रावणबन्धनम् ॥

नर्मदापुलिने यत्र राक्षसेन्द्रः सुदारुणः ।
पुष्पापहारं कुरुते तस्माद्देशाददूरतः ॥ १ ॥

अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः ।
क्रीडते सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥

तासां मध्यगतो राजा रराज च तदाऽर्जुनः ।
करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥

जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् ।
रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥

कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् ।
कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥ ५ ॥

समीननक्रमकरः सपुष्पकुशसंस्तरः ।
स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६ ॥

स वेगः कार्तवीर्येण संप्रेषित इवाम्भसः ।
पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७ ॥

रावणोऽर्धसमाप्तं तमुत्सृज्य नियमं तदा ।
नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८ ॥

पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसन्निभम् ।
वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९ ॥

ततोऽनुभ्रान्तशकुनां स्वभावोपरमे स्थिताम् ।
निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १० ॥

सव्येतरकराङ्गुल्या सशब्दं च दशाननः ।
वेगप्रभवमन्वेष्टुं सोऽदिशच्छुकसारणौ ॥ ११ ॥

तौ तु रावणसन्दिष्टौ भ्रातरौ शुकसारणौ ।
व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥ १२ ॥

अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ ।
पश्येतां पुरुषं तोये क्रीडन्तं सहयोषितम् ॥ १३ ॥

बृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम् ।
मदरक्तान्तनयनं मदव्याकुलतेजसम् ॥ १४ ॥

नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम् ।
गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५ ॥

बालानां वरनारीणां सहस्रेण समावृतम् ।
समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६ ॥

तमद्भुततमं दृष्ट्वा राक्षसौ शुकसारणौ ।
संनिवृत्तावुपागम्य रावणं तमथोचतु ॥ १७ ॥

बृहत्सालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर ।
नर्मदां शैलवद्रुद्ध्वा क्रीडापयति योषितः ॥ १८ ॥

तेन बाहुसहस्रेण संनिरुद्धजला नदी ।
सागरोद्गारसङ्काशानुद्गारान्सृजते मुहुः ॥ १९ ॥

इत्येवं भाषमाणौ तौ निशाम्य शुकसारणौ ।
रावणोऽर्जुन इत्युक्त्वा प्रययौ युद्धलालसः ॥ २० ॥

अर्जुनाभिमुखे तस्मिन्प्रस्थिते राक्षसेश्वरे ।
सकृदेव कृतो रावः सरक्तः प्रेषितो घनैः ॥ २१ ॥

महोदरमहापार्श्वधूम्राक्षशुकसारणैः ।
संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः ॥ २२ ॥

अदीर्घेणैव कालेन स तदा राक्षसो बली ।
तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः ॥ २३ ॥

स तत्र स्त्रीपरिवृतं वाशिताभिरिव द्विपम् ।
नरेन्द्रं पश्यते राजा राक्षसानां तदाऽर्जुनम् ॥ २४ ॥

स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ।
इत्येवमर्जुनामात्यानाह गम्भीरया गिरा ॥ २५ ॥

अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य वै ।
युद्धार्थी समनुप्राप्तो रावणो नाम राक्षसः ॥ २६ ॥

रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते ।
उत्तस्थुः सायुधास्त्राश्च रावणं वाक्यमब्रुवन् ॥ २७ ॥

युद्धस्य कालो विज्ञातः साधु भोः साधु रावण ।
यः क्षीबं स्त्रीवृतं चैव योद्धुमुत्सहसे नृपम् ॥ २८ ॥

स्त्रीसमक्षं कथं यत्तद्योद्धुमुत्सहसेऽर्जुनम् ।
वाशितामध्यगं मत्तं शार्दूल इव कुञ्जरम् ॥ २९ ॥

क्षमस्वाद्य दशग्रीव चोष्यतां शर्वरी त्वया ।
युद्धश्रद्धा तु यद्यस्ति श्वस्तात समरेऽर्जुनम् ॥ ३० ॥

यद्यद्यास्ति मतिर्योद्धुं युद्धतृष्णासमावृता ।
निहत्यास्मांस्ततो युद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥

ततस्ते रावणामात्यैरमात्याः पार्थिवस्य तु ।
सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः ॥ ३२ ॥

ततो हलहलाशब्दो नर्मदातीर आबभौ ।
अर्जुनस्यानुयातॄणां रावणस्य च मन्त्रिणाम् ॥ ३३ ॥

इषुभिस्तोमरैः शूलैस्त्रिशूलैर्वज्रकर्षणैः ।
सरावणानर्दयन्तः समन्तात्समभिद्रुताः ॥ ३४ ॥

हैहयाधिपयोधानां वेग आसीत्सुदारुणः ।
सनक्रमीनमकरसमुद्रस्येव निस्वनः ॥ ३५ ॥

रावणस्य तु तेऽमात्याः प्रहस्तशुकसारणाः ।
कार्तवीर्यबलं क्रुद्धा निर्दहन्ति स्म तेजसा ॥ ३६ ॥

अर्जुनाय तु तत्कर्म रावणस्य समन्त्रिणः ।
क्रीडमानाय कथितं पुरुषैर्द्वाररक्षिभिः ॥ ३७ ॥

श्रुत्वा न भेतव्यमिति स्त्रीजनं तं ततोऽर्जुनः ।
उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः ॥ ३८ ॥

क्रोधदूषितनेत्रस्तु स ततोऽर्जुनपावकः ।
प्रजज्वाल महाघोरो युगान्त इव पावकः ॥ ३९ ॥

स तूर्णतरमादाय वरहेमाङ्गदो गदाम् ।
अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४० ॥

बाहुविक्षेपकरणां समुद्यम्य महागदाम् ।
गारुडं वेगमास्थाय चापपातैव सोऽर्जुनः ॥ ४१ ॥

तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः ।
स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः ॥ ४२ ॥

ततोऽस्य मुसलं घोरं लोहबद्धं महोद्धतः ।
प्रहस्तः प्रेषयन्क्रुद्धो ररास च यथाऽम्बुदः ॥ ४३ ॥

तस्याग्रे मुसलस्याग्निरशोकापीडसन्निभः ।
प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव ॥ ४४ ॥

आधावमानं मुसलं कार्तवीर्यस्तदार्जुनः ।
निपुणं वञ्चयामास सगदोऽगदविक्रमः ॥ ४५ ॥

ततस्तमभिदुद्राव प्रहस्तं हैहयाधिपः ।
भ्रामयानो गदां गुर्वीं पञ्चबाहुशतोच्छ्र्याम् ॥ ४६ ॥

तथा हतोऽतिवेगेन प्रहस्तो गदया तदा ।
निपपात हतः शैलो वज्रिवज्रहतो यथा ॥ ४७ ॥

प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः ।
समहोदरधूम्राक्षा ह्यपसृष्टा रणाजिरात् ॥ ४८ ॥

अपक्रान्तेष्वमात्येषु प्रहस्ते विनिपातिते ।
रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम् ॥ ४९ ॥

सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम् ।
नृपराक्षसयोस्तत्र चारब्धं रोमहर्षणम् ॥ ५० ॥

सागराविव संरब्धौ चलन्मूलाविवाचलौ ।
तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ॥ ५१ ॥

बलोद्धतौ यथा नागौ वाशितार्थे यथा वृषौ ।
मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ ॥ ५२ ॥

रुद्रकालाविव क्रुद्धौ तदा तौ राक्षसार्जुनौ ।
परस्परं गदाभ्यां तौ ताडयामासतुर्भृशम् ॥ ५३ ॥

वज्रप्रहारानचला यथा घोरान्विषेहिरे ।
गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥ ५४ ॥
यथाऽशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः ।
तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः ॥ ५५ ॥
अर्जुनस्य गदा सा तु पात्यमानाऽहितोरसि ।
काञ्चनाभं नभश्चक्रे विद्युत्सौदामिनी यथा ॥ ५६ ॥
तथैव रावणेनापि पात्यमाना मुहुर्मुहुः ।
अर्जुनोरसि निर्भाति गदोल्केव महागिरौ ॥ ५७ ॥
नार्जुनः खेदमायाति न राक्षसगणेश्वरः ।
सममासीत्तयोर्युद्धं यथा पूर्वं बलीन्द्रयोः ॥ ५८ ॥
शृङ्गैरिव वृषा युध्यन्दन्ताग्रैरिव कुञ्जरौ ।
परस्परं विनिघ्नन्तौ नरराक्षससत्तमौ ॥ ५९ ॥
ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा ।
स्तनयोरन्तरे मुक्ता रावणस्य महोरसि ॥ ६० ॥
वरदानकृतत्राणे सा गदा रावणोरसि ।
दुर्बलेव यथावेगं द्विधा भूत्वाऽपतत्क्षितौ ॥ ६१ ॥
स त्वर्जुनप्रमुक्तेन गदापातेन रावणः ।
अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् ॥ ६२ ॥
स विह्वलं तदालक्ष्य दशग्रीवं ततोऽर्जुनः ।
सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम् ॥ ६३ ॥
स तं बाहुसहस्रेण बलाद्गृह्य दशाननम् ।
बबन्ध बलवान्राजा बलिं नारायणो यथा ॥ ६४ ॥

बध्यमाने दशग्रीवे सिद्धचारणदेवताः ।
साध्वीति वादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि ॥ ६५ ॥
व्याघ्रो मृगमिवादाय मृगराडिव दन्तिनम् ।
ननाद हैहयो राजा हर्षादम्बुदवन्मुहुः ॥ ६६ ॥
प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम् ।
सह तै राक्षसैः क्रुद्धश्चाभिदुद्राव पार्थिवम् ॥ ६७ ॥
नक्तञ्चराणां वेगस्तु तेषामापततां बभौ ।
उद्धूत आतपापाये पयोदानामिवाम्बुधौ ॥ ६८ ॥
मुञ्च मुञ्चेति भाषन्तस्तिष्ठ तिष्ठेति चासकृत् ।
मुसलानि सशूलानि सोत्ससर्ज तदाऽर्जुने ॥ ६९ ॥
अप्राप्तान्येव तान्याशु असंभ्रान्तस्तदाऽर्जुनः ।
आयुधान्यमरारीणां जग्राहारिनिषूदनः ॥ ७० ॥
ततस्तैरेव रक्षांसि दुर्धरैः प्रवरायुधैः ।
भित्त्वा विद्रावयामास वायुरम्बुधरानिव ॥ ७१ ॥
राक्षसांस्त्रासयित्वा तु कार्तवीर्योऽर्जुनस्तदा ।
रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥ ७२ ॥
स कीर्यमाणः कुसुमाक्षतोत्करैर्द्विजैः सपौरैः पुरुहूतसन्निभः ।
तदाऽर्जुनः संप्रविवेश तां पुरीं बलिं निगृह्येव सहस्रलोचनः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
उत्तरकाण्डे द्वात्रिंशः सर्गः ॥

आदितः श्लोकाः 22099 उत्तरकाण्डे आदितः श्लोकाः 1375

## त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

### रावणमोचनम् ॥

रावणग्रहणं तत्तु वायुग्रहणसन्निभम् ।
ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १ ॥

ततः पुत्रकृतस्नेहात्कम्प्यमानो महाधृतिः ।
माहिष्मतीपतिं द्रष्टुमाजगाम महामुनिः ॥ २ ॥

स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः ।
पुरीं माहिष्मतीं प्राप्तो मनःसंपातविक्रमः ॥ ३ ॥

सोऽमरावतिसङ्काशां हृष्टपुष्टजनाकुलाम् ।
प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४ ॥

पादचारमिवादित्यं निष्पतन्तं सुदुर्दशम् ।
ततस्ते प्रत्यभिज्ञाय द्वाःस्था राज्ञे न्यवेदयन् ॥ ५ ॥

पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः ।
शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६ ॥

पुरोहितोऽस्य गृह्याघ्यं मधुपर्कं तथैव च ।
पुरस्तात्प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥

ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् ।
अर्जुनो दृश्य संभ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८ ॥

स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च ।
पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९ ॥

